# पाणिनीयधातुपाठसमीक्षा

## [द्वितीयो भागः]

कुलपतेः डॉ. मण्डनमिश्रस्य 'शिवसङ्कल्प'
पुरोवाचा पुरस्कृता

प्रणेता सम्पादकश्च
डॉ. भागीरथ प्रसाद त्रिपाठी 'वागीशः शास्त्री'

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA - STUDIES

[ VOL. XIV ]

# PĀṆINĪYA-DHĀTUPĀṬHA-SAMĪKṢĀ

[ PART TWO ]

*FOREWORD BY*

**DR. MANDAN MISHRA**

*Vice - Chancellor*

*WRITTEN & EDITED BY*

**DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'**

*DIRECTOR, RESEARCH INSTITUTE*

*Sampurnanand Sanskrit University*

*Varanasi*




VARANASI

1996

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



*Published by—*
**Dr. Harish Chandra Mani Tripath**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



Second Edition, 1000 Copies
Price Rs. 130.00



*Printed by—*
**Tara Printing Works**
Kamachha, Varanasi-221 010

सरस्वतीभवन-अध्ययनमाला
[ १४ ]

# पाणिनीयधातुपाठसमीक्षा

[ द्वितीयो भागः ]

कुलपतेः डॉ. मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा
पुरस्कृता

प्रणेता सम्पादकश्च
डॉ. भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी




वाराणस्याम्
२०५३तमे वैक्रमाब्दे १९१८तमे शकाब्दे १९९६तमे ख्रैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*

**निदेशकः, अनुसन्धानसंस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।



*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी,

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.



*प्राप्तिस्थानम् —*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.



द्वितीयं संस्करणम्, १००० प्रतिरूपाणि

मूल्यम्— १३०.०० रूप्यकाणि



*मुद्रकः —*

**तारा प्रिंटिंग वर्क्स**

कमच्छा, वाराणसी-२२१ ०१०.

# शिवसङ्कल्पः

अनितरसाधारणं संस्कृतभाषाव्याकरणम्। तत्रभगवता पतञ्जलिना व्याकरणाध्ययनस्य प्रयोजनं महाभाष्य उक्तम्— **'रक्षोहागमलघ्वसन्देहाः'** इति; किन्त्वतोऽप्यधिकमेकं प्रयोजनं शब्दानां व्युत्पत्तिः। व्याकरणस्य शाब्दिकार्थोऽप्यमुमेवार्थमनुब्रवीति। यथा— **व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम्**। शब्दानां व्युत्पादनं प्रत्येकं शब्दस्य मूलधातुतो भवति। प्रत्येकं शब्दानामेको मूलधातुर्भवति, येन मूलधातुना तस्मिंस्तस्मिन्नर्थे तत्तत्प्रत्ययैः शब्दा व्युत्पाद्यन्ते। यस्य शब्दस्य कयापि रीत्या मूलधातुर्नाधिगम्यते, स शब्दोऽव्युत्पन्नप्रातिपदिक इत्युच्यते। अत एव शब्दस्य द्वौ प्रकारौ— व्युत्पन्नप्रातिपदिकः, अव्युत्पन्नप्रातिपदिकश्चेति। निरुक्तशास्त्रे यच्छब्दानां निर्वचनं क्रियते, तद् व्युत्पादनमेव। यथा यास्काचार्यस्य निरुक्ते दुहितृशब्दस्य निरुक्तिर्दूरे हिता दुहिता दोग्ध्री वा (यावज्जीवनं मातापित्रोर्दोहनकर्त्री) इति। एवमेव जीर्यते जारयति वेति 'जरा' इत्यादि। एवमेव वेदस्य मन्त्रभागेषु, उपनिषद्भागेषु च बहूनां शब्दानां व्युत्पत्तिर्दृश्यते। अतो वैयाकरणानां प्रथमं कर्तव्यं शब्दानां मूलधातोः सङ्कलनम्। तच्च महावैयाकरणेन पाणिनिना खिलभागे धातुपाठरूपेण धातुसङ्कलनं कृतम्। तत्र भ्वाद्यदादि-जुहोत्यादि-दिवादि-स्वादि-तुदादि-रुधादि-तनादि-क्र्यादि-चुरादिरूपा दशविध-धातुगणपाठाः सन्ति।

भारतीयशास्त्राणां विशेषतः संस्कृतभाषानिबद्धशास्त्राणामध्ययनरुचिर्यदा भारतेतरदेशेषु व्यवर्द्धत, तदा पाणिनीयव्याकरणस्य विशिष्टं महत्त्वं वैदेशिकैर्विज्ञैर्ज्ञातम्। तेषु भाषाविज्ञानविदः पाणिनीयशास्त्रं प्रत्यधिकमाकृष्टाः। तेष्वमेरिकादेशाभिजनो विलियम-ड्वाइट्-ह्विट्नीमहाशयो वैदिक-लौकिकशब्दान् बहून् विचिन्त्यैतत्साधितवान् यत् पाणिनीयव्याकरणे प्रयुक्ता बहवो धातवोऽपाणिनीयाः, अर्थात् पाणिनिनिर्मितधातुपाठे न सन्ति। पाणिनेरनन्तरमनेकैः कोविदैर्बहवो धातवस्तत्र पाणिनिधातुपाठे सन्निवेशिता इत्यस्या विप्रतिपत्तेः समाधानाय विद्वद्वरेण्यः **श्रीभागीरथप्रसादत्रिपाठि**महोदयोऽनेकभाषाविन् महता श्रमेण विततशब्दराशिमवधृत्य **'पाणिनीयधातुपाठसमीक्षा'**-नामकं ग्रन्थं व्यरचयत्। एतस्य प्रथमो भागः पूर्वमेव प्रकाशतामगमत्।

पूर्वोक्तधातुगणेषु दशमो गणश्चुरादिगणस्तत्र विषये भाषाविज्ञानविद् ह्विट्नीमहोदय एकां नवीनां दृष्टिं धारयति यच्चुरादिगणो धातुपाठगण एव नास्ति। पूर्वोक्तसमाधानाय ग्रन्थस्यास्य प्रथमे भागे त्रिपाठिमहोदयः प्रायतत; किन्तु वैदेशिकभाषाविज्ञानविद्भिश्चुरादिगणस्योपरि विशेषरूपेण कृतस्य धूलिप्रक्षेपस्य परिमार्जनाय प्रक्षालनाय विशेषतो द्वितीयभागं निर्मितवान्। अनेन महर्षिपाणिनिसमर्चनं जायत एव, सहैव पाणिनिव्याकरणस्य परिपूर्णत्वं महनीयत्वञ्च प्रदीप्येते। अनेन पाणिनीयव्याकरणाध्येतॄणां मेधा समेधिष्यत इत्यत्र नास्ति संशीतिः।

विद्वद्वरेण्या: '**वागीश: शास्त्री**' इत्युपनाम्ना सुप्रसिद्धा: **श्रीभागीरथप्रसादत्रिपाठि**महोदया अस्य विश्वविद्यालयस्य शोधसंस्थानस्य निदेशका:, विश्वविद्यालयस्य "**सारस्वती सुषमा**" इत्याख्याया: प्रमुखशोधपत्रिकाया: सम्पादका:। प्राच्यपाश्चात्त्यसमीक्षाशास्त्रे संस्कृतवाङ्मये च तेषां सुप्रतिष्ठितं पाण्डित्यम्। **वाग्योगचेतनापीठ**संस्थाया: संस्थापनमपि तै: कृतम्, यस्या माध्यमेनानेके भारतीयसंस्कृतिसंवर्द्धका: कार्यक्रमा वाराणस्यां सञ्चाल्यन्ते। तेषां मार्गनिर्देशने विश्वविद्यालयस्यास्य शोधसंस्थानमनेकसंवत्सरेभ्यो विकाशमानं वर्तते। इदं हि प्रकाशनं तेषां विलक्षणाया: प्रतिभाया मनीषायाश्च प्रतिफलम्। अहमस्मिन् प्रसङ्गे **श्रीवागीश**महाशयाय स्वकीयान्यभिनन्दनानि, विश्वविद्यालयस्य प्रकाशनाधिकारिणे **डॉ. हरिश्चन्द्रमणित्रिपाठिने,** ग्रन्थस्यास्य मुद्रकाय तारायन्त्रालयस्य सञ्चालकाय **श्रीरविप्रकाशपण्ड्या**महोदयाय च शुभाशंसनानि व्याहरन् ग्रन्थमिमं व्याकरणविद्यासमुपासकेभ्य: समर्पयामि।

**वाराणसी**
चैत्रपूर्णिमा,
वि. सं. २०५३
(३.४.१९९६ खैस्ताब्द:)

***मण्डनमिश्र:***
कुलपति:
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

पुण्यश्लोकस्य महामुनेर्भगवतः पाणिनेर्व्याकरणं जगति समश्नुते महतीं समज्ञाम् । तत्रत्येषु खिलपाठेषु धातुपाठोऽनर्वाचीनं सदप्युर्वरं प्रवरं च साक्ष्यं जागर्ति भारतीयभाषातत्त्वशास्त्रस्य । अयं विविधानां भारोपीयभाषाणां निर्वचनविधावनिर्वचनीयं साहाय्यमारचयतीति संगिरन्ते भाषावैज्ञानिकाः ।

पाश्चात्यदेशीयो भाषाशास्त्रवित्पुङ्गवो विलियम्ड्वाइट्ह्विट्नीमहोदयः पाणिनीयव्याकरणशास्त्रपारावारमवगाढः सन् पुष्कलानि नूतनतत्त्वरत्नान्याविर्भावयामास । तत्र लक्ष्यलक्षणात्मकत्वं व्याकरणस्य तावदभ्युपयतां वैयाकरणानां प्रयोगनिकषत्वमभिविचिन्त्य ह्विट्नीमहोदयः पाणिनीयधातुपाठस्य तान् बहुतरान् धातून् समालोचयामास, यानसौ नाधिजगाम संस्कृतवाङ्मयपारावारे प्रयुक्तान् ।

धातुपाठसमीक्षायामस्यां १९६५ तमे ख्रीस्ताब्दे प्रकाशितचरायां ह्विट्नीमहोदयविचारः प्रयोगनिकषे महता प्रयासेन समीक्षितः । १९८४ तमे ख्रीस्ताब्दे द्वितीयसंस्करणतया तस्या अस्याः प्रकाशितायाः प्रथमे भागे नवगणीपर्यन्तानामेव धातूनां व्यधायि समीक्षा । दशमगणीयविकरणस्य प्रेरणार्थकधातुभ्योऽप्युपयुज्यमानतया 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' 'तत्करोति तदाचष्टे'–प्रभृतिगणसूत्रान्वीक्षणेन खलु चुरादिगणस्य प्रायशो नामधातुत्वमवसीयते तज्ज्ञैः । तादृशस्य तस्य पार्थक्येन विवेचनविषयीकारो भवत्विति दृशा यद्यपि चुरादिगणः प्रथमसंस्करणेऽपि व्यवेचि विविक्ततया, तथापि द्वितीयेऽस्मिन् संस्करणेऽसौ द्वितीयभागतया व्यपवृक्तो गुणलुब्धानां बुधवराणां जिज्ञासूनां च पुरस्तात् प्रस्तूयतेऽधुना मया ।

अनुसन्धित्सूनामुपचिकीर्षयाऽत्र तानि भूयांसि परिशिष्टानि यथायथं संयोजितानि सन्ति, यानि प्रथमभागीयभूमिकायां समाश्रुतपूर्वाण्यासन् । इह परिशिष्टानां व्यवस्थितौ मदात्मजः श्रीवास्तोष्पतिशास्त्री, ( एम्. एस्-सी., स्टैट. रिसर्च स्कालर, का० हि० वि० वि० ), पूर्वानुसन्धानाधिकारी डॉ० रामबृक्षचतुर्वेदी डॉ० गोविन्दसर्षिश्च यथायथं साहायकमचारिषुरिति तान् हार्देराशीराशिभिः संयुनज्मि । भूतभावनभवानीजानये समर्पितेनानेनावशिष्टसम्पन्नेन कर्मणा गुणगृह्या विचक्षणाः प्रीणिता जिज्ञासुजनाश्चोपकृता भविष्यन्तीति बाढमाशासानो विरमति ।

संक्रान्तौ २०४९ वि०

वागीशः शास्त्री

# विषयानुक्रमणिका

# अथ चुरादिगणधातवः

चुरादिगणपठिता धातवो नवगणपठितधातुभ्यः पृथक्कृत्योपन्यस्यन्ते। अमी प्रायशो नामधातव इति। तद्यथा क्षीरस्वामी—"अन्ये तु प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च" ( १०/२९६ यु. मी. सं. ) इत्येव सिद्धे सूत्र-छिद्रान्ध-दण्डादय उदाहरणार्थं निर्दशिता इति व्याख्यन्—१०/३२५ ( यु. मी. सं. )।

तत्रैव पृष्ठे स्वामी "भूवादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति, चुरादिगणस्तु निदर्शनार्थ इत्येके। ( तेनापठितेभ्योऽपि क्वचित् स्वार्थे णिच्—सि. कौ. धा. सं. १९४४ )–रामो राज्यमकारयत्–वा. रा. ६,१२८,१०५"। अन्यच्च 'राजा राज्यमकारयत्'—वा. रा. १,४२,८=कृतवान् ( ति. )। "चुरादिणिचौ बहुलं निदर्शनं वेत्यपरे। तेन पक्षे 'चोरति', 'चिन्तति' इत्यादि सिद्धम्।"

विलियम्-ड्वाइट्-ह्विट्नीमहाशयश्चुरादिगणं नाङ्गीकरोति। स इह नामधातूनां प्रयोजकधातूनां च संक्रान्तिमभिव्यनक्ति "संस्कृत ग्रामर" इत्याख्यस्य स्वपुस्तकस्य ६०७ तमेऽध्याये। तद्यथा—

"हिन्दुवैयाकरणा दशमगणम् उत वा चुरगणम् 'अय'-विकरणान्वितं संख्यान्ति। अन्यादृशधातुभ्य इव तिबादयोऽपि ततः सञ्जायन्ते। इह यौगिकक्रियापदता प्रयोजकता च। सुतमाम् एष पूर्णतो यौगिकक्रियापदत्वेन व्यवहरिष्यते।"

"पूर्वं ( ६०७ तमेऽध्याये ) सूचितमासीद् यद् हिन्दुवैयाकरणा अनुतदुदाहरणं च भूयिष्ठाः पाश्चात्त्या अपि ( नवगणतः ) अन्यं यौगिकधातुगणं प्रमाणयन्ति वर्णितपूर्व–( भ्वाद्यादिक्रयाद्यन्त )-तुल्यक्रमम्। यद्यप्येतद्गणधातुरूपाणि सामान्यतो मूलधातुसम्पृक्तम् 'अय'–विकरणं दर्शयन्ति तथाप्ययं शुद्धो गणो नास्ति प्रत्युत सहकारी यौगिकक्रियापदात्मको वा। ( अस्य क्रियापदानि सन्त्यंशतः प्रयोजकरूपाणि, परिवर्तितयतिना सहांशतो नामधातुरूपाणि च )।

—"संस्कृत ग्रामर" इत्यस्य ७७५ तमेऽध्याये।

वयं तु ब्रूमः—सर्वे धातवः पूर्वं नामान्येवासन्, व्यापाराणां नामस्वेव सत्त्वेन तेषां स्वातन्त्र्येणोपस्थानासम्भवात्। कस्यापि नाम्नो बहवो व्यापारा भवन्ति। अत एव कारणाद् धातूनां बहवोऽर्था लभ्यन्ते, क्वचन मिथो विरुद्धा अपि। तद्यथा—√चक् ( चक ) तृप्तौ प्रतिघाते च; √पुस्त् √बुस्त् आदरानादरयोः। भूशब्दः पृथिवीवाचको नाम। तस्मिन् स्थिति-वृद्धि-संक्रान्ति-द्रव-जय-पूज्यता-पालन-शोधन-जीवनावर्तन-क्षरणोत्पत्तिप्रभृतयो व्यापारा विद्यन्त इति हेतोः क्रियारूपतां गतेऽपि तस्मिंस्तथात्वं साम्प्रतम्। स्थितिद्रवादिविरुद्धार्थोदाहरणानि—भूत्यै–मनु. ५,३९=विवृद्ध्यर्थः ( मन्वर्थ. ); भूत्यर्थम्–रघु. १,१८=वृद्ध्यर्थम् ( संजी. ); अभवत्–रघु.

४,१०=संक्रान्तः ( संजी. ); देवान् भावयतानेन–गी. ३,११=तर्पयत ( नी. व्या. ); भावेषु–रघु. ३,४१=वस्तुषु ( संजी. ); भवन्–नैष. २,३२=प्रपद्यमानः ( प्रकाश. ); भवन्ति–नैष. २,३२ ( प्रकाशटीकायामेव )=भ्रमन्ति; भाविता=तर्किता, द्राविता ( प्रकाश. ); भविष्यन्ति–महाभार. ५,१२८,४३=जेष्यन्ति ( नील. ); ( प्रणयं ) भावयन्ती–महाभार. ४,३७,७=दर्शयन्ती ( नील. ); भावितस्य–महाभार. ५,२६,१४=पूजितस्य ( नील. ); भावितः–महाभार. ५,८७,१=हृष्टः ( नील. ); बुभूषति–महाभार. १२,१३९,९७=पालयितुमिच्छति ( नील. ); भवन्ति–महाभार. १२,२९५,३४=उत्पद्यन्ते ( नील. ); भावितैः–महाभार. १२,३२६,२६=शोधितैः; भविष्यामि–महाभार. २,११३, २८=जीविष्यामि ( नील. ); भवन्ति–हरिवंशे १,८,४०=आवर्तन्ते ( नील. ); भावयेत्–हरिवंशे १,६,१०=क्षरेत् ( नील. )।

भूवादयो धातवः (पा. अ. १,३,१) इति सूत्रं नाम्नामेव क्रियावाचकानां धातुसंज्ञां विदधाति, न तु धातूनाम् इति ह्विट्नीमहाशयेन चुरादिमेव नामधातुं वदता नाचिन्ति। अपरम्, चौरादिकानां धातूनां प्रयोजकता नास्ति, स्वार्थे णिच्त्वात्। यथा–चोरयति,-चिन्तयति,-कथयति,-गणयति-प्रभृतीनि शुद्धधातुरूपवदेव प्रयुज्यन्ते। गणयति=गणनां करोति, न तु कारयति—"गणयति न दुःखं न च सुखम्"। आम्, केचन धातवः सन्ति ये प्रयोजकसारतामप्यादधते।

यदीयः प्रथमः क्रमः क्वापि नास्ति तादृशाः केचन धातवः—√अंश १०/३६२; √कथ ( कथ ) १०/२९७; √क्षम्प् ( क्षपि ) १०/८३; √गण १०/२९९; √चम्प् ( चपि ) १०/८२; √चिक्क् ( चिक्क ) १०/६०; चिन्त् ( चिति ) १०/२; √चुण्ट् ( चुटि ) १०/१९९; √चुम्भ् ( चुभि ) १०/९४; √चुर् ( चुर ) १०/१; √पल्यूल १०/३२८; √वुल् ( वुल ) १०/६६ प्रभृतयः सन्ति। मन्ये नवगणप्रयुक्ता बहवोऽत्र धातवः संक्रान्ताः। अत एव हेतोर्न ते प्रयोजकत्वेन निर्धारणीयाः, स्वार्थणिजन्तत्वेन भ्वाद्यादिवत् तदर्थकत्वात्।

| | | |
|---|---|---|
| १९०३+√अंश (अंश) १०/३६२ मे-सा-श-च-जै-शा × | समाघाते ( प ) क्षी-कात-हे संघाते—काछ। विभाजने—वो। | <√अंस ( अंस ) समाघाते ( प ) इति चन्द्रः–क्षी। √अक्ष् ( अक्षू ) १/ व्याप्तौ संघाते च ( प )। अंशुः शमष्टमात्रो भवति। अननाय शम्भवतीति वा —निरु. २,५,५। √अश् ( अशू ) ५/ व्याप्तौ ( आ ) |

समाघातः=विभाजनम्—क्षी।

**भारोपीय०**—√*ऐनॆक्-, √*नॆक्-, √*ऍक्-, √*अंक्=प्रापणे, दाने, उपस्थितौ ( उपहारे ), कर्षणे ।

**भारेनीय०**—अवे. अस=अंशः—वा. पॉकर्नीः ।

**भारोपीय०**—लैति. उमॆरुस्; गॉथि. अम्स; अर्मे. उस्-पी. टी. ऐस. पालि-इँग्लिश्-कोशात् ।

**संस्कृत०**—अंशु०-ऋ. १,४६,१०; अंशुक० (ऋषि०)-ऋ. ८,५,२६; त्वमंशो विदथे देव भाजयुः ( अग्नि० )-ऋ. २,१,४; वा. सं. १०, ५; अ. वे. ६,२,५ ।

| | | |
|---|---|---|
| १९०४+√अंस (अंस) १०/३६२ श-च-काकृ-कात × | समाघाते ( प ) इति चन्द्रः-क्षी । | < √अंश ( अंश ) समाघाते ( प ) । |
| | क्षी-मै-सा-जै-शा-हे । | √अंह् ( अहि ) १०/ |
| | विभाजने—वो । | भासार्थः ( प ) । |

**भारोपीय०**—ऑम् ( ऐ ) सॉ-स्=स्कन्धः—वा. पॉकर्नीः ।

**संस्कृत०**—व्यंसयामास तस्य प्रहारम्-महाभार. ३,११७२८; शक्ति व्यंसितां माधवेन-महाभार. १,१९७ ।

**पालि०**—अंस=स्कन्धः—जातक १,९ ।

| | | |
|---|---|---|
| १९०५+√अंह् ( अहि ) १०/२३७ मै-श-च-जै-काकृ-कात-शा× | भासार्थः ( प ) क्षी-हे । | √अंह् ( अहि ) १/ गतौ ( आ ) । |
| | भाषार्थः—सा । | √अंह् १/३१९ कलुषे ( प ) |
| | भासे—वो । | काकृ । |
| | | √अम् ( अम ) १/ गत्यादिषु ( प ) । |
| | | अघायति-ऋ. १,१३१,७ । |
| | | अभ्यघायति-शौ. ७,७३,३ । |
| | | √अङ्घ् ( अघि ) १/ गत्याक्षेपे ( आ ) |

| | | |
|---|---|---|
| १९०६+√अघ ( अघ ) १०/३८५ मै-सा-श-च-जै-शा× | पापे ( प ) क्षी । | √अघ् १/४१३b गत्याक्षेपे ( आ ) काकृ । |
| | पापकरणे—काकृ-कात-हे । | √अंह् १/३१९ कलुषे ( प ) काकृ । |

पापकृतौ—वो । √अंह् (अहि) १०/ भासार्थः ( प ) ।
√अंह् (अहि) १/ गतौ (आ)

**भारोपीय०**—अघ् ( लॉ )=अननुकूलम्, घृणापूर्णम् ( : ) ।

**भारेनीय०**—अवे. अय=अघम्–वा. पॉकर्नीः ।

**संस्कृत०**—अघो वृकः–ऋ. १,४२,२ । अघम्–खि. २, ११, १, ४; मा. ३५,६; शौ. १,२८,३ ।

अर्वाञ्च एतच्छब्दनिष्पत्त्यर्थं कल्पितम् √अघ् इति धातुं √अंह् इत्यस्यैव रूपान्तरमाहुः । √अङ्घ् इत्यस्य तु भौवादिकस्य गत्याक्षेपे पठितत्वादपार्थं एवायमायासः संभाव्येत । आक्षेपस्य निन्दायां वैयाकरणैर्व्याख्यातचरत्वान्निन्दितकर्मात्मकशब्दार्थसांगत्यस्य √अङ्घ् इत्यनेन सहजप्राप्तत्वादिति भाव इति शास्त्री विश्वबन्धुः (वैदि. प. को. संहि. भा. ) ।

वयं तु ब्रूमः √अघ् १,४१३ b गत्याक्षेपे ( आ ) काकृ, अंह् १/३१९ कलुषे (प) काकृ, √अङ्घ् १/१०५ गत्याक्षेपे ( आ ) इत्येतेष्वस्ति कश्चन विकाससंबन्धः । √अघ् > √अङ्घ् > √अंह् इति । अतः काशकृत्स्नीयस्य √अघ् धातोः सत्त्वादपार्थ एवायमायास इति ।

१९०७+√अङ्क (अकि) १०/३७२ लक्षणे ( प ) | √अङ्क् (अकिं) १/लक्षणे (आ) ।
मै-सा-च-काकृ-कात×,श
क्षी-जै-शा-हे ।
गतौ—हे ।
लक्ष्मणि—वो ।
√अङ्क (अङ्क) १०/ पदे लक्षणे च (प) सा ।
√अङ्ग ( अङ्ग ) १०/ च=पदे लक्षणे (प) मै ।
√अङ्घ (अङ्घ) १०/ पदलक्षणयोः ( प ) इत्येके–क्षी ।

**संस्कृत०**—अङ्कयेत्—सुदर्शनो. २९४ : १० ।

**पालि०**—अंकेति—जातक १,४५१ ।

**हिन्दी०**—√अँकाना=मूल्यनिर्धारणे, परीक्षणे ।

१९०८+√अङ्क (अङ्क) १०/३७३ पदलक्षणयोः (प) | < √अङ्ग पदलक्षणयोः (प) ।
श-च-जै-शा×
इत्यन्ये–क्षी ।
पदे लक्षणे च - सा ।
लक्षणे—मै-काकृ-कात-हे ।
पदे लक्ष्मणि—वो ।
शेषः पूर्ववत् ।
पर्यङ्खयाते–ऋ. १०,१६,७ ।
'अञ्चतेरङ्कः' इति भाष्याद् √अङ्क पदे लक्षणे चेति धातुरनार्ष इत्यन्ये

[ नागेशः ]—महाभाष्ये ८, २, ४८; गु. प्र. सं. १२३पृ. ।

पदम्=संख्यास्थानम् दुर्गादासः ।

**संस्कृत०**—विराधाङ्कगतां शुभाम्–वा. रा. ३,२,१६ ( गी. प्रे. सं. )–अङ्कः= उत्सङ्गः ।

| | | |
|---|---|---|
| १९०९+√अङ्ग (अङ्ग) १०/३७३ श-च-काक्र-कात × (जै-शा—√अङ्ग्) | पदलक्षणयोः (प) क्षी । पदे लक्षणे च—मै-सा-जै-शा-हे । पदे लक्ष्मणि – वो । | >√अङ्क (अङ्क)पदलक्षणयोः ( प )। ध्वनिसादृश्यानि पूर्ववत् । |

**संस्कृत०**—अङ्गं गलितं पलितं मुण्डम्–च. प. स्तो. ( शङ्करा० )। अङ्ग ! कच्चित् कुशली तातः—कादम्ब. ( मुम्बा. संस्क. ) २२१ ।

| | | |
|---|---|---|
| १९१०+√अङ्घ (अङ्घ) १०/३७३ मै-सा-श-च-जै-काक्र-कात-शा-हे-वो × | पदलक्षणयोः (प) इत्येके –क्षी । | <√अङ्ग (अङ्ग)पदलक्षणयोः ( प )। पूर्ववच्छेषो ज्ञेयः । |

√अङ्क>√अङ्ग>√अङ्घ इति विकासो मननीयः ।

| | | |
|---|---|---|
| १९११+√अञ्च् (अन्चु) १०/२११ श-च × | विशेषणे ( प ) क्षी-मै-सा-जै-काक्र-कात-शा-हे । व्यक्तौ—वो । | √अञ्च् (अन्चु) १/गतौ याचने च ( उ ) मं । |

विशेषणम्=अतिशयः—क्षी ।

**संस्कृत०**—मुदमञ्चय–गीतगो. १०,११=जनय ।

| | | |
|---|---|---|
| १९१२√अञ्ज् (अजि) १०/२२८ मै-श-च-जै-काक्र-कात-शा × | भासार्थः ( प ) क्षी-हे । भासि—वो । भाषार्थः—स्वामिकाश्यपानुसारेण लिख्यते—सा । | √अञ्ज् (अन्जू) ७/व्यक्तिम्रक्षणकान्ति''''(प) मै । √अज् ( अज ) १/गतिक्षेपणयोः ( प )। |
| १९१३+√अट्ट् (अट्ट) १०/२५ श × | अनादरे (प) इति च दुर्गः—क्षी | √अट्ट् (अट्ट) १/अतिक्रमणहिंसनयोः ( आ )। |

| | | |
|---|---|---|
| | क्षी-मै-सा-च-जै-काकृ-<br>कात-शा-हे-वो ।<br>तौच्छये—वो । | √अड्ड् (अड्ड) १/अभियोगे<br>( प ) । |

संस्कृत०—कालाट्टहसित०—राजतर. २,४७ ।

पालि०—अट्टियति=व्याकुलतायाम्, चिन्तायाम्–दीघ. १,२१३ ।

हिन्दी०—√अठाना*†(<अटनम्=अनादरे)=पीडने, क्लेशने ।

हिन्दी०—√आटना=दमने, भारेणानमने ।

मुण्डारी०—आटा आटि=कलहे, तर्कणे (तु. सन्थाल–आड्रा, आड्रि इति) ।

| | | |
|---|---|---|
| १९१४+√अन्ध (अन्ध) १०/३७०<br>च ×, श (जै-शा–<br>√अन्ध्) | दृष्ट्युपसंहारे ( प )<br>क्षी-सा-जै-काकृ-कात-<br>शा-हे ।<br>दृष्ट्युपघाते—मै-सा ।<br>दृक्क्षये—वा । | √अन्त् (अति) १/ बन्धने<br>( प ) ।<br>√अन्द् ( अदि ) १/<br>बन्धने ( प ) । |

भारोपीय०—अन्धॉ=अन्धः; अन्धकारः । लैति. उम्ब्र=छाया । म. नीदेर्लैं. अन्दॉरेन्; पु. उ. ज. अन्दान्‌; म. उ. ज. अन्तार्नं, अन्दान्‌; आंग्लभा. ब्ल्-आइन्ड् ।

भारेनीय०—अवे. अन्द=अन्धः ( म् ), अन्धकारः—वा. पॉकर्नीः ।

संस्कृत०—प्रेमान्धः स्यान्निःश्रोणो भूत्—ऋ. १,११२,८; ४,४,१३ ।

प्राकृत०—√अंधाव ( सक )=अन्धत्वे । अंधावेइ–विक्रान्तकौर. ८४ ।

| | | |
|---|---|---|
| १९१५+√अम् ( अम ) १०/१८८<br>च ×, श<br><br>प्रयोजकः | रोगे ( प )<br>क्षी-मै-सा-जै-काकृ-<br>कात-शा-हे-वो ।<br>—ह्वि. । | √अम् ( अम ) १/<br>गत्यादिषु ( प ) । |

भारोपीय०—ऑमॉ–ः ओमॉ=अपरिपक्वम्, असिद्धम् । लैति. अमारुस्=तीक्ष्णम् । अर्मे. हुम्=अपरिपक्वम्, असिद्धम् । पु. आइरि. ऑम्=अपरिपक्वम्, असिद्धम्—वा. पॉकर्नीः ।

संस्कृत०—यस्या उदरमामयत्–ऋ. १०,८६,२३ । मूत्रं भवत्वामयत्–अ. वे. ९,८,१० ।

| | | |
|---|---|---|
| १९१६+√अर्क् (अर्क) १०/१०३<br>च ×, श | स्तवने ( प )<br>क्षी-मै-सा-कात-हे ।<br>स्तुतौ—जै-काकृ-शा ।<br>'तपने' इत्येके—क्षी-सा ।<br>स्तवनपाठो युक्तः—सा । | अर्चन्त्यर्कमर्किणः—निरु.<br>५,४,६ ।<br>√अर्च् ( अर्च ) १/<br>पूजायाम् ( प ) ।<br>√ऋच् ( ऋच ) ६/ |

| | | |
|---|---|---|
| | तापस्तुत्योः—वो। | स्तुतौ (प)। √अर्क् १/४१० f आदाने (आ) काकृ। √अर्च् (अर्च) १०/ पूजायाम् (प)। अर्कः—निघ. २,७ = अन्ननाम; २,२० = वज्रनाम। अर्को देवो भवति यदेनमर्चन्ति—निरु. ५,४,६। |

**भारोपीय०**—√*ऐर्क्=मयूखः, गभस्तिः; द्युतौ। अर्मे. ऐर्ग्=किरणः; ऐर्किन्=स्वर्गः, आकाशः–वा. पॉकर्नीः।

| | | |
|---|---|---|
| १९१७+√अर्च् (अर्च) १०/२५९ श | पूजायाम् (प) आधृषाद् वा क्षी,-मै-सा (उ), काकृ,-जै-कात-शा-हे (आ)। पूजे—वो। | √अर्क् (अर्क) १०/ स्तवने (प)। शेषः पूर्ववत्। |
| प्रयोज. | ह्वि.। | |

**संस्कृत०**—अर्चयन्ति–अथर्वशिखो. ६,१६; रुद्दृ. ६; वउ. ६,४५; अर्चय–वि. १७। अर्चयेत्–मुण्डको. ३,१,१०; मैत्र्यु. ४,६; ब्रवि. ५५; अर्चयिष्यन्ति–भव. १,५६।

| | | |
|---|---|---|
| १९१८+√अर्ज् (अर्ज) १०/१९३ च×,श | प्रतियत्ने (प) क्षी-मै-सा-जै-काकृ-कात-शा-हे। संस्कारे—वो। | √अर्ज् (अर्ज) १/ अर्जने (प)। |
| प्रयो. | ह्वि.। | |
| प्रतियत्नः= | संस्कारः—क्षी। | |

**संस्कृत०**—यद् गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्–मनु. ११,१९३। धनमर्जयेत्–कथासरि. ६,३६। इह नास्ति प्रयोजकता, स्वार्थे णिच्त्वात्।

| | | |
|---|---|---|
| १९१९+√अर्थ (अर्थ) १०/३४९ श (जै-शा—√अर्थ्) | उपयाच्ञायाम् (आ) क्षी-मै-सा-जै-काकृ-कात-शा। याच्ञायाम्—च। | √ऋ १/ गतिप्रापणयोः (प)–उणा. २,४ स्थन्। √अर्द् (अर्द) १/ गतौ याचने च (प)। |

| | | |
|---|---|---|
| | उपयाचने—हे । याचने—वो । | अर्थोऽर्तेररणस्थो वा—निरु. १,१८,१ । |

भारोपीय०—ऐर्—:

भारेनीय०—अर्त=कर्तव्यम्, अनुग्रह उपकारो वा–वा. पॉकर्नीः ।

संस्कृत०—अर्थयेथे–ऋ. १०,१०६,७; अर्थयाथे–१,८२,१; कौ. १,४१६; जै. १,४० । अर्थयस्व धनं बहु—महाभार. ३,१२६८१ । स्वर्गति प्रार्थयन्ते–गी. ९,२० । समर्थये–रघु. ११,७२=मन्ये ( संजी. ) ।

प्राकृत०—√अत्थ ( सक )=याचने, प्रार्थने, विज्ञप्तौ । अत्थए–निशीथचूर्णि ४ ।

हिन्दी०—√अरथाना=बोधने, विवरणे, ( २ ) व्याख्यायाम् ।

| | | |
|---|---|---|
| १९२०+√अर्द् (अर्द) १०/२७७ शा-च × | हिंसायाम् ( प ) आधृषाद् वा क्षी-,मै-सा-(उ)-,काक्-, जै-कात-शा-हे ( आ ) । वधे—वो । | √अर्द् ( अर्द ) १/ गतौ याचने च ( प ); यातने च इत्येके—क्षी । अर्दयति—निघ. २,१९=वधकर्मा । √ऋ १/ गतिप्रापणयोः ( प ) । |

संस्कृत०—अर्दयोदधिम्–अ. वे. ४,१५,६; अर्दयन्–६,४९,२ । अर्दयति–मै. ४,५,६ । अर्दयामास तोमरैः–महाभार. ३,१६४५० ।

प्राकृत०—√अड्ड ( सक )=वधे, ताडने–व्यवहारसूत्रभा. १० ।

हिन्दी०—√अर्दना*=पीडने ।

हिन्दी०—√अरदना*†=मर्दने, पेषणे, ( २ ) वधे ।

| | | |
|---|---|---|
| १९२१+√अर्ह् (अर्ह) १०/१९९ च ×,श | पूजायाम् ( प ) क्षी-मै-सा-जै-काकृ-कात-शा-हे । पूजने—वो । | √अर्ह् ( अर्ह ) १/ पूजायाम् ( प ) । √अर्घ् ( अर्घ ) १/ मूल्ये ( प ) वो । |
| प्रयो. | ह्वि० । | |

संस्कृत०—स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा–मनु. ३,३; अर्हयेन्मधुपर्केण–३,११९ ।

| | |
|---|---|
| १९२२+√अवधीर (अवधीर) १०/३८६ क्षी-श-च-जै-काकृ-कात-शा-हे × | ········मै मै-सा × अवज्ञायाम्—वो । |

संस्कृत०—अवधीरितसुहृद्वचनस्य–हितो. १। अवधीर्य–शिशु. ९,५९=तिरस्कृत्य (सर्वङ्कषा)। अवधीरणाम्–रघु. ८,४८; शाकु. ३,१४। अवधीरिता प्रिया–शाकु. ६,१२।

प्राकृत०—√अवहीर (सक.)=अवज्ञाने, तिरस्कारे। अवहीरेइ – महा; अवहीरंत–सुपा. ३१२; कवक्र. अवहीरिज्जंत–सुपा ३७६; अवहीरणा=अवहेलना—से. १३, १६; वेणी १८; अवहीरिअ.—से. ११,७; गउड।

प्राकृत०—√अवहील–अवहीलह–सण.।

१९२३+√अश्व (अश्वतर) १०/३८८ ·····( आ ) तेनातिक्रामति।

शा-जै शा-हे-वो×

यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः—निरु. १,१२,५।

आचक्षीरन्नष्टेत्यश्वम्—निरु. १,१३,१।

अश्वः कस्मादश्नुतेऽध्वानम्। महाशनो भवतोति वा—निरु. २,२७,४।

अश्वतरः ( =तनुरश्वः )—वत्सोक्षाश्वर्षमेभ्यश्च तनुत्वे–पा. अ. ५/३/९१। अश्वतरी–पञ्चत. २३२। अश्वाश्वतरसङ्घांश्च—महाभार. विराट. १८,१३; कम्बलाश्वतरो नित्यं कर्णभूषणभूषितौ—स्क. पु. १,३४,३६। केचिद् हयान् समारूढा उष्ट्रान् अश्वतरानपि–स्क. पु. १,१३,५।

१९२४+√आन्दोल (आन्दोल) १०/६४; ३८४ ········( प ) क्षी-मै-सा×(हे)। दोलने—वो।

शा-च-जै-काकृ-कात-शा× ( हे–√अन्दोल )।

√दुल् ( दुल ) १०/ उत्क्षेपे ( प )।

संस्कृत०—आन्दोलयति–महो. ४,११३।

प्राकृत०—√अंदोल ( अक )=दोलने, ( २ ) कम्पने, (३) संदेहे–स. ५२१।

प्राकृत०—√अंदोल ( सक )=कम्पने–सुरसुन्दरीचरि. ३,६७।

१९२५+√आप् (आप्लृ) १०/२८६ लम्भने ( प ) क्षी-मै-सा-, (उ),-जै-काकृ-कात-शा-हे। व्यापने—वो।

शा-च×

√आप् (आप्लृ) ५/ व्याप्तौ ( प )।

प्रयो. ह्वि.।

लम्भनम्=प्राप्तिः—क्षी।

संस्कृत०—आपयतो वै तावन्योन्यस्य कामम्–छान्दोग्यो. १,१,६। आपयितुं भूपमाह यौगन्धरायणः—कथास. १७,३२।

१९२६+√आह्वर (आह्वरक) १०/३९० ·······(प) √ह्वृ १/कौटिल्ये (प)।
श-जै-शा-हे-वो× आचष्टे;
तेनातिक्रामति वा।

१९२७+√इल् (इल) १०/१३० प्रेरणे (प) √इल् (इल) ६/ स्वप्नक्षेपणयोः (प)।
श-च× क्षी-मै-सा-जै-काक्ृ-कात-शा-हे। √ईर् (ईर) २/ गतौ कम्पने च (आ)।
क्षेपे—वो। √एला (कण्ड्वा.) विलासे (प)।

**भारोपीय०**—√*ऐल्=विश्रान्तौ, शयने ?—वा. पॉकर्नीः।

**संस्कृत०**—(कथं वातो नेलयति कथं न रमते मनः–अ. वे. १०,७,३७। यां कामयते सा भूत्वेलयति –शब्रा. १०,३,३, ८।)

१९२८+√ईड् (ईड) १०/१३० स्तुतौ (प) √ईड् (ईड) २/ स्तुतौ (आ)।
च×, श क्षी-मै-सा-जै-काक्ृ-कात-शा-हे-वो।
स्तवने—कात।
प्रयो. ह्वि.।

**संस्कृत०**–ईलयति–शब्रा. १०,३,३,८। गीर्भिरग्र्याभिरैडयन्- वा. रा. ३,५,११ (गी. प्रे. सं.)। नास्त्यत्र प्रयोजकता।

१९२९+√ईर् (ईर) १०/२६१ क्षेपे (प) √ईर् (ईर) २/ गतौ कम्पने च (आ)।
च×, श क्षी-मै-सा-काक्ृ-हे। √ईड् (ईड) २/ स्तुतौ (आ)।
क्षेपणे—जै-कात।
प्रेरणे—शा।
गतौ नुदि—वो।
प्रयो. ह्वि.।

**संस्कृत०**—अपः समुद्रमैरयत्—ऋ. ८,६,१३। पन्थानो येभिर्विश्वमैरयः–अ. वे. ७,३३,१। रथन्तरं साम ईरयति–महाभार. १३,९८६; अथ वाचमीरयति तामु नाम्नीरयसि– १३,९८६।

१९३०+√उध्रस् (उध्रस) १०/२१४ उञ्छे (प) उः- उद्+√ह्रस् (ह्रस) १/
मै-श-च-जै-काक्ृ-कात-शा× प्रयोगसमवायी- शब्दार्थः (प)।

| | | |
|---|---|---|
| ( सा-हे-वो-√उध्रस् ) | त्यके—क्षी । क्षी-सा-हे । उञ्छे उत्क्षिपि च—वो । | √ध्रस् (उध्रस्) ९/ उञ्छे ( प )। |
| १९३१+√उलण्ड् (उलडि) १०/९ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो× | उत्क्षेपणे ( प ) अपरे तु—सा । | √ओलण्ड् ( ओलडि ) १०/ उत्क्षेपे ( प )। √लण्ड् ( लडि ) १०/ उत्क्षेपे ( प ) अन्ये—क्षी । √लन्द् (लदि) १०/ उत्क्षेपे (प) चान्द्राः—क्षी । |

हिन्दी०—√उलटना; √ (उ) लादना ।

बुन्देली०—√उलदबौ=अन्नादिपूर्णशकट्या अग्रत उपरि क्षेपणे, पृष्ठभागतश्चाधोनयने, ( २ ) अधःक्षेपे ।

हिन्दी०—√उलदना*; √उड़ेलना*; √उँड़ेलना; √उलेंडना (<उलण्डनम्)=पातने, क्षेपणे—"उलदत मद अनुमद ज्यों जलधि जल"–कविर्भूषणः ।

| | | |
|---|---|---|
| १९३२+√ऊन (ऊन) १०/३३५ श× | परिहाणे ( प ) क्षी-मै-सा-जै-कात-शा-हे-वो । परिहाणौ—च । परिहरणे—काकृ । | √ओण् ( ओणृ ) १/ अपनयने ( प )। √ऊ १/५५१ f शब्दे ( आ ) काकृ । |

भारोपीय०—*आँड्,-*ऐन्ड्आ=अपूर्णम्, न्यूनम्, हीनम् । निष्ठान्तत्वेन–नॉ—:

भारेनीय०—अवे. ऊन=ऊनम्, न्यूनम्, अपर्याप्तम्—वा. पॉकर्नीः ।

संस्कृत०—मा त्वायतो जरितुः काममूनयीः–ऋ. १,५३,३ । ( अनित्यण्यन्तत्वं तु यथालक्ष्यम्–क्षी. १०/२०१ यु. मी. सं. ) आङ्योगेऽभाव इति वागीशः । यत्त ऊनं तत्त आपूरयति–अ. वे. १२,१,६१ ।

| | | |
|---|---|---|
| १९३३√ऊर्ज् ( ऊर्ज ) १०/१६ श | बलप्राणनयोः ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । जीवने बले—वो | √ओज १०/ बलतेजनयोः ( प ) वो । √ऊर्ज् १/४२५ g गतौ (आ) काकृ । ऊर्क्–निघ. २,७=अन्ननाम। ऊर्जयमाने–निरु. ९,४३,१= |

बलवती, ऊर्जतां च कुर्वाणे–
दुर्गाचार्यः ।

प्राणनम्=जीवनम्—क्षी ।

**भारोपीय०**—√*ऊऍर् ( ऍ ) ग्=वाय्वाघाते, उच्छूनतायाम्, विस्तारे–वा. पॉकर्नीः ।

**संस्कृत०**—सनाभयो वाजिनमूर्जयन्ति–ऋ. ९,८७,४ । स प्राणिति तमूर्जयति–शब्रा. ७,५,१,१८ । ऊर्जयति–काठ. २०,७ ।

१९३४+√ऊष ( ऊष ) १०/३८५ मै-सा-श-च-जै-काकृ-कात-शा-वो× | छुरणे ( प ) क्षी-हे । | √ऊष् ( ऊष ) १/२९० a रुजायाम् ( प ) काकृ; कात २२३ । √ऊष् ( ऊष ) १/ रुजायाम् ( प ) । √रूष् ( रूष ) १/ भूषायाम् ( प ) इति सुधाकरः–सा ।

१९३५+√ओलण्ड् (ओलडि) १०/९ श | उत्क्षेपे ( प ) क्षी-च-जै-काकृ-कात-शा-हे-वो । उत्क्षेपणे—मै-सा । | √लण्ड् ( लडि ) १०/ उत्क्षेपे ( प ) अन्ये–क्षी । √लन्द् ( लदि ) १०/ उत्क्षेपे इति चान्द्राः—क्षी । √ओलञ्ज् १/ उत्क्षेपणे (प) —वो ।

**प्राकृत०**—उल्लंडिअ ( <ओलण्डितम् )=बहिष्कृतम्, उत्क्षिप्तम् ( पाअ ) ।

**बुन्देली०**—[ √ओंझबौ, √उड़ेलबौ, √उलझबौ—(<ओलण्डनम्, आ + उज्झनम् ? )=उदेलने, पातने, क्षेपे ।]

**बुन्देली०**—√उलदबौ, √उल्दबौ=उत्क्षेपणे ।

१९३६+√कण् (कण्) १०/१८३ च×,श | निमीलने ( प ) क्षी-मै-सा-जै-काकृ-कात-शा-हे-वो । | √क्ष्मील् ( क्ष्मील ) १/ निमेषणे ( प ) । √कण् ( कण ) १/ शब्दार्थः ( प ) । √कण् ( कण ) १/ गतौ (प) मित्त्वम् । काणो विक्रान्तदर्शन इत्यौप-

मन्यवः। कणतेर्वा स्यादणुभावकर्मणः।
....दर्शनाणूभावात् काणः-
निरु. ६,३०,१।

भारोपीय०—√*स्कॅर्-, √*कॅर्=छेदने।

संस्कृत०—काणः-ऋ. १०,१५५,१; अ. वे. १२,४,३; तै. २,५,१,७। ( सरांसि सोमस्य काणुका-ऋ. ८,६६,४ )।

द्रविड०—काण् ( काण्ण्-, कण्ट् )=प्रेक्षणे, मलयालम—काणुक=प्रेक्षणे, निरीक्षणे, अवबोधने, काणि=दर्शकः, काणिक्क=दर्शने, प्रदर्शने, ? कोता-कण् (कड्)= प्रेक्षणे, तोदा-कोण्=प्रेक्षणे, कोण् ( कोड )=प्रेक्षणे, कन्नड-काण् ( कण्ड् )=प्रेक्षणे; कोडगु-कण्=प्रेक्षणे; तुलु—काणुँसावुनि, काणिसावुनि=दर्शने; तेलगु—कनु ( कान् )= प्रेक्षणे ( ए द्रविडियन् ऐटिमॉलाजिकल् डिक्शनरी १२०९ ) तमिल०—कण=नेत्रम् ( उक्तग्रन्थे ९७३ )।

१९३७+√कण्ठ् (कठि) १०/२९४ शोके (प) आधृषाद्वा क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। आध्याने—वो √कण्ठ् ( कठि ) १/ शोके ( आ )।
श ×

संस्कृत०—कण्ठः स्तम्भितवाष्पवृत्तिकलुषः-शाकु. ४,५।

१९३८+√कण्ड् (कडि) १०/४५ भेदे (प) इत्येके-क्षी क्षी-जै-काकृ-कात-शा। भेदने—मै-सा। भेदे खण्डने च—हे। भेदे रक्षणे—वो। <√खण्ड् (खडि) भेदे (प)। √खड् (खड) १०/ भेदे (प)। √खण्ड् ( खडि ) १/ मन्थे (आ)।
श ×

भारोपीय०—√*कॅल्-, √*कॅला=ताडने, तोडने-वा. पॉकर्नीः।

संस्कृत०—त्रिभिः काण्डैः-अ. वे. १२,३,४२। काण्डचित्राणि-वा. रा. २,८९,१८ काण्डे=जले, चित्राणि ( तिल. )। कण्डनी चोदकुम्भश्च-मनु. ३,६८। काण्डात् काण्डात् प्ररोहन्ती—वा. सं. १२,३,४२।

प्राकृत०—√कंड ( सक )=(१) अवहनने, (२) कर्षणे, (३) खर्जने (प्रयोज.)। कंडित-णाया. १,७। वक्कृ-कंडंत-ओघ. ४६८; गा. ६६३।

हिन्दी०—√काँड़ना†*=(१) मर्दने, (२) अवहनने, (३) अतिताडने।

१९३९+√कत्र (कत्र) १०/३५७ शैथिल्ये (प) मै-सा-कात-हे-वो। √कन्त्र् १०/६ उपाये (प) काकृ।
क्षी-श-च-जै-काकृ-

शा ×

√कर्तृ (कर्तृ) १०/ शैथिल्ये (प) इति चन्द्रः-क्षी ।

√कर्त्र् (कर्त्र) १०/ शैथिल्ये (प) इति दुर्गः-क्षी ।

√कत्थ (कत्थ) १०/३३५ शैथिल्ये (प) हे ।

√कध्र (कध्र) १०/२४० शैथिल्ये (प) काकृ ।

√गात्र (गात्र) १०/ शैथिल्ये (आ) वो ।

इह स्पष्टो विकासः । सर्वेषामन्ते √गात्रधातुः सुपरिचितः प्रतीयते ।

१९४०+√कथ (कथ) १०/२९७ वाक्यप्रतिबन्धे (प) क्षी-हे ।
शा

वाक्यप्रबन्धे—मै-सा-च-काकृ-कात-शा-हे-वो ।
वदने—जै-हे ।

√कत्थ् (कत्थ) १/ श्लाघायाम् (आ) ।

भारोपीय०—√*केत्-(?), √*कोत्, √*कृत्=विकत्थने । लिथु. कतिलिन्ति=संभाषणे, कथने-वा. पॉकर्नीः ।

संस्कृत०—कथयति–त्रिपाद्विभूतिमहानारायणो. ५,६ । कथयन्ति–भव. २,५० । कथयस्व–त्रिता. ५,१ । कथयिष्यामि–मैं. २,३; मैत्र्यु. २,३ ।

पालि०—कथेति–जातक ५,४६०=सूचनायाम् । कथेति–जातक १,१=कथने ।

प्राकृत०—√कह (सक)=कथने । वकृ-कत्थंत, कहिज्जंत–राज.; सुर. १,४४; गा. १९८ ।

प्राकृत०—{√कहाव (सक)=कथने । कहावेइ–महा. ।
　　　　　 {√काह (सक)=कथने । काहयंते–महा. ।

हिन्दी०—{√कथना*=(१) कथने, (२) निन्दने ।
　　　　 {√कहना (<कथनम्)=कथने, वर्णने ।

१९४१+√कर्ण (कर्ण) १०/३६९ भेदे (प) क्षी-कात-शा-हे ।
शा-च-जै-काकृ ×
(शा √कर्ण्)

भेदने—मै-सा ।
भिदि—वो ।

√कड् १०/३८ c भेदे (प) काकृ ।

√कण्ड् (कडि) १०/ भेदे (प) इत्येके-क्षी ।

कर्णः　कृन्ततेर्निकृत्तद्वारो भवति–निरु. १,९,१ । कीर्यते

क्षिप्यते शब्दो वायुना यत्र–
√कॄ+उणा. ३,१० इति नन् ।

**भारोपीय०**—√*कॆर्—, √*कर्=ताडने, बलाद् ग्रहणे । किम्रि. कर्न्= ग्रहणे–वा. पॉकर्नीः ।

**संस्कृत०**—निचेतारा च कर्णैः–ऋ. १,१८४,२ । इत्याकर्ण्य क्षितीश–नैष. ५, १३७ ।

**प्राकृत०**—कण्ण (<कर्णः)–पि. ३५८; प्रासू. २

१९४२+√कर्त् (कर्तृ) १०/३५८ शैथिल्ये (प) <√कर्तृ (कर्तृ) शैथिल्ये (प) ।
मै-सा-श-च-जै-काकृ- इति चन्द्रः–क्षी । द्रष्ट.√कत्र १०/३५७ ।
कात-शा-वो × क्षी-हे । √कृत् (कृती) ६/ छेदने (प) ।

१९४३+√कर्त (कर्त) १०/३६८ शैथिल्ये (प) अत्र दुर्ग <√कत्र (कत्र) शैथिल्ये (प) ।
क्षी-मै-श-च-जै-काकृ- इत्यपि–सा । ध्वनिसादृश्यानि पूर्ववत् ।
कात-शा× सा-हे-वो ।

१९४४+√कर्तृ (कर्तृ) १०/३५८ शैथिल्ये (प) ध्वनिसादृश्यानि पूर्ववत् ।
मै-सा-श-च-जै-काकृ- क्षी ।
कात-शा-हे-वो×

१९४५+√कर्त्र (कर्त्र) १०/३५८ शैथिल्ये (प) इति <√कर्तृ (कर्तृ) शैथिल्ये
मै-सा-श-च-जै-काकृ- दुर्गः—क्षी । (प) ।
कात-शा× क्षी-हे-वो । ध्वनिसादृश्यानि पूर्ववत् ।

१९४६+√कल् (कल) १०/६८ क्षेपे (प) √कल् (कल) १/ शब्द-
च×, श क्षी-मै-सा-जै-काकृ- संख्यानयोः (आ) ।
कात-शा-हे । √कल (कल) १०/ गतौ
नुदि—वो । संख्याने च (प) ।
प्रयो. ह्वि. । √किल् (किल) १०/
क्षेपे (प) ।
कालयति–निघ. २,१४=
गतिकर्मा ।

**भारोपीय०**—√*कॆलॄ=प्रेरणे–जू. पॉकर्नीः ।

**संस्कृत०**—संकालयन्—महाभार. २,१०५,१२=क्षपयन् (नील.); कालयिता–२,२१,२=संहर्ता (नील.) । संकालनम्–वा. रा. २,६६,१५=प्रेतनिर्हारम् (तिल.)

| | | |
|---|---|---|
| १९४७+√कल ( कल ) १०/३१२ श | गतौ संख्याने च ( प ) क्षी-मै-सा-काकृ-कात । संख्याने—च । गतौ—जै । आगतौ—शा । संख्यानगत्योः—हे । गतिसंख्ययोः—वो । | √गण (गण) १०/ संख्याने ( प ) । √कलञ्ज् १/३१३j गतौ ( प ) काकृ । शेषः पूर्ववत् । |

प्रयो. ह्वि. ।

**संस्कृत०**—कालः कलयतामहम्–गी. १०,३० । कालः कलयतां प्रभुः–भा. पु. ३,२९,३८ । कलये–तैब्रा. ३,४,१६,१ । [ समकालयन्–महाभार. १,२१,७=त्रनमनयन् ( नील. ) ] (प्राकालयत्–काठ. १०,६–धा. गतौ वृत्तिः) । कलयेदमानमनसम्–शिशु. ९,५८=मन्येत ।

**प्राकृत०**—√कल ( सक )=( १ ) संख्याने, ( २ ) शब्दे, ( ३ ) ज्ञाने, ( ४ ) प्रत्यभिज्ञाने, संकोचे । कलयंति–विसे. २०२९ । वकृ—कलयंत–सुपा. ४ ।

| | | |
|---|---|---|
| १९४८+√काल ( काल ) १०/३२५ क्षी-श-च-जै-काकृ-कात-शा× | उपदेशे ( प ) मै-सा-हे । उपयोगे—सा । ( चौ. सं. ) कालोपदेशे—वो । | ध्वनिसादृश्यानि पूर्ववत् । |

**संस्कृत०**—कालयन्तः–महाभार. २,१७,३४=नियमयन्तः ( नील. ) । गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते—महाभार. विराट. ३१,८ । गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले–मभार. विराट. ३७,८ । षष्टिं गवां सहस्राणि कुरवः कालयन्ति च—महाभार. विराट. ३५,५;१०.

| | | |
|---|---|---|
| १९४९+√कालोड (कालोडित) १०/३८९ मै-सा-श-च जै-काकृ-कात-शा-हे-वो× | ………( प ) इति गुप्तः—क्षी । तदाचष्टे; तेनातिक्रामति वा । | <√गालोड (गालोडित) ( प ) क्+आ+√लुड् √लुड् (लुड) १/३१० ( प ) । |

| | | |
|---|---|---|
| १९५०√किल ( किल ) १०/६९ मै-श-च-जै-काकृ-शा× | क्षेपे ( प ) क्षी-सा-कात-हे । नुदि—वो । | √कल् (कल) १०/६८ क्षेपे ( प ) । √किल् ( किल ) ६/ श्वैत्यक्रीडनयोः (प) । |

| | | |
|---|---|---|
| | | √केल् (केलृ) १/५४७ चलने ( प )। |
| १९५१√किष्क् ( किष्क ) १०/१५४ मं-सा-श-च-काकृ-कात× | हिंसायाम् ( आ ) क्षी-जै-शा-हे। वधे—वो। | >√हिष्क् (हिष्क) हिंसायाम् ( आ ) इति दुर्गः—क्षी। √हिक्क् ( हिक्क ) १/ अव्यक्ते शब्दे ( उ )। √कष् ( कष ) १/ हिंसार्थः ( प )। √खष् ( खष ) १/ हिंसार्थः ( प )। |

भारोपीय०—*स्क् ( आॅ ) स्काॅ-,—उ=दोर्दण्डः, हस्तः। अल्बे. क्र्के=दोर्दण्डः, स्कन्धः—वा. पाॅकर्नीः।

संस्कृत०—किष्किन्धा–वा. रा. १,१,६५। किष्किन्ध्या–वा. रा. ४,१०,३४; महाभार. ३,१६१०७ ( किं किं दधातीति किष्किन्धा। √धा+कः। पारस्करादित्वात् पूर्वस्य किमो मलोपः सुट् षत्वं च निपातनात्–इति वैयाकरणाः )। चतुःकिष्कुः–वा. रा. ५,३२,११।

प्राकृत०—किक्किडि=सर्पः ( हिंसायाम् )–दे. २,३२।

प्राकृत०—किक्किंधा=नगरीविशेषः–से. १४,१५।

अपभ्रंश०—किक्किंधि=पर्वतविशेषः–पउम. ६,४५; नृपविशेषः–पउम. ६,१५४; १०,२०।

हिन्दी०—खीस ( <किष्कः )=विनष्टम्।

हिन्दी०—√खीस जाना=नाशे–'खीस खलाई'–तुलसीदासः।

| | | |
|---|---|---|
| १९५२+√कीट् (कीट) १०/१०० च-त्रो×,श ( काकृ-√टीक् ) ( वर्णविपर्ययः ) | वरणे ( प ) क्षी। बन्धने—मै-काकृ-कात। वर्णे—सा-शा। वर्णने—जै-हे। | √कील् (कील) १/ बन्धे (प)। √कीट् ( कीट ) १/ बन्धवर्णयोः ( प ) वो। √कट् ( कटे ) १/ वर्षावरणयोः ( प )। √टङ्क् (टकि) १०/ बन्धने (प)। √टीक् १०/८० बन्धने ( प ) काकृ। |

भारोपीय०—कुऋमि=कृमिः, कीटो जन्तुविशेषः-वा. पाॅकर्नीः।

**संस्कृत०**—कोट०-अ. वे. ९,४,१६; शब्रा. १४,९,१,१९; छान्दोग्यो, ६,९,३; वा. रा. २,२५,१६ ।

| | | |
|---|---|---|
| १९५३+√कुंश् (कुशि) १०/२३० च-जै-शा×,श | भासार्थः (प)। क्षी—हे। भाषार्थः—मै-सा-काकृ-कात। द्युतौ—वो। | √कुश् (कुश) ४/१०५ शंश्लेषणे (प)। √कुंस् (कुसि) १०/२२९ भासार्थः (प)। |
| १९५४+√कुंस् (कुसि) १०/२२९ श-च-कात× | भासार्थः (प) क्षी-शा-हे। भाषार्थः—मै-सा-जै-काकृ। भासने—वो। | √कुश् (कुश) ४/१०५ संश्लेषणे (प)। √कुंश् (कुशि) १०/२३० भासार्थः (प)। |
| १९५५+√कुट् (कुट) १०/१६४ क्षी-मै-श-च-जै-शा-हे-वो× | छेदने (आ) 'इत्येके' स्वामी—सा। सा,-काकृ कात (प)। | <√त्रुट् (त्रुट) छेदने (आ)। √कुट्ट् (कुट्ट) १०/२३ छेदन-कुत्सनयोः (प)। √कुठ् छिदि—सौ. धा.—वो। √कृत् (कृती) ६/छेदने (प)। |

**संस्कृत०**—कोटि०-महाभार. १,४०,२२=धनुरग्रम् । कोटि०-रघु. ७, ४६= कोणः (कोट्यते=छिद्यतेऽनया । उणा. ४,११७ इतीन् । बाहुलकाद् गुणः)। कोटि०-कुमारसं. २, २६=रेखा ।

| | | |
|---|---|---|
| १९५६+√कुट् (कुट) १०/१७० च-काकृ-कात×,श | प्रतापने (आ) क्षी-मै-सा-जै-शा-हे-वो। | <√कूट् (कूट) आप्रदाने (आ) इति दुर्गः-क्षी। √कुट् (कुट) ६/कौटिल्ये (प)। पिता कुटस्य चर्षणिः (ऋ. १,४६,४)। पिता कृतस्य निरु. ५, २४, १। शेषः पूर्ववत्। |

**संस्कृत०**—प्रकुट्य विधिवत् तदा—महाभार. १,२८४२। अवकुट्य—सुश्रु. २,१७५,२०। कोटः (कुट्यते=प्रताप्यते शत्रुरत्र, अनेन वा। दुर्गमाश्रित्य प्रबलविपक्ष-मपि प्रतापयितुं शक्यत इत्यर्थः)=दुर्गम्। प्रयोगो नोपलब्धः।

**हिन्दी०**—कोट=परिधिः (दुर्गम्)।

| | | |
|---|---|---|
| १९५७+√कुटुम्ब् (कुटुम्ब) १०/१४७ धारणे ( आ ) | | ध्वनिसादृश्यानि पूर्ववत् । |
| मै-जै-काकृ-कात-शा × | क्षी-सा-,च-? हे । | |
| | धृत्याम्—वो । | |

भारोपीय०—*कुऐल=, कीटानां पशूनां मधुमक्षिकाणां वा ) संघः, समूहः । ट्(ओ)-विस्तारः—वा. पॉकर्नीः ।

संस्कृत०—तयोरपि कुटुम्बाभ्यामाहरेत्-मनु. ११,१४। स्वकुटुम्बान् महीपतिः-मनु. ११,२२ ।

प्राकृत०—कुडुंब=परिजनः, परिवारः-उवा.; महा.; प्रासू. १६७ ।

| | | |
|---|---|---|
| १९५८+√कुट्ट् ( कुट्ट ) १०/२३ | छेदनकुत्सनयोः (प) | √कुट् १।११७ वैकल्ये (प) । |
| काकृ-कात×,श | क्षी । | √कुठ् १०/२४ छेदने ( प ) |
| | छेदने—च । | काकृ । |
| | छेदने कुत्सने च-जै-हे । | शेषः पूर्ववत् । |
| | छेदनभर्त्सनयोः—मै-सा । | √कृत् ६/ छेदने इत्यस्य प्राकृतरूपमिति ह्विट्न्यादयः । |
| | कुत्सने—शा । | |
| | कुत्साछिदोः—वो । | |
| | 'छेदनपूरणयोः' इति स्वामी—सा । | |
| प्रयोज. | ह्वि. । | |

भारोपीय०—√*( स् ) कॉइ=आच्छादने-वा. पॉकर्नीः ।

संस्कृत०—वाश्मकुट्टकः-याज्ञवल्क्य. ३,४९। अश्मकुट्ट०-महाभार. ३,१२३६०; मनु. ६, १७। कुट्टनी ( कुट्ट्यते=छिद्यते स्त्रीणां कुलमनया )—कथासरि. १२, ७९। कुट्टापरान्त०-महाभार. ६,३५६। ससुधाकुट्टिमतलः-वा. रा. २,८०,३। मणिप्रवर-कुट्टिम०-महाभार. १४,२५२२।

पालि०—कोट्टेति-जातक १,४७८।

प्राकृत०—√कुट्ट ( सक )=कुट्टने, ताडने, (२) कर्तने, (३) औष्ण्ये, (४) उपालम्भे । भवि—कुट्टइस्सं-पि. ५२८ ।

प्राकृत०—√कोट्ट ( सक )=कुट्टने, ताडने, (२) कर्तने । कवकृ—कोटिज्जमाण-आवम. । संकृ—कोट्टिय-जीव. ३ ।

हिन्दी०—√कूटना ( <कुट्टनम् ) ।

मुण्डारी०—√कोटे=मुद्गरेण ताडने ।

| | | |
|---|---|---|
| १९५९+√कुट्ट् (कुट्ट) १०/१६८ क्षी-मै-श-च-जै-काक्र-कात-शा-हे × | प्रतापने ( आ ) इति क्षीरस्वामी—सा–, वो । | √कुट्ट् ( कुट ) १०/१७० प्रतापने ( आ ) । शेषः पूर्ववत् । |

सर्वाण्युदाहरणानि पूर्ववज्ज्ञेयानि । विशेषतः प्राकृतधातोरुदाहरणं सुस्पष्टमौण्ये दृश्यते ।

| | | |
|---|---|---|
| १९६०+√कुण (कुण) १०/३३९ श-च × | आमन्त्रणे ( प ) क्षी-मै-सा-जै-काक्र-कात-शा-हे । आभाषमन्त्रयोः—वो । | √कुण् ( कुण ) शब्दोपकरणयोः ( प ) । √गुण (गुण) १०/ आमन्त्रणे ( प ) । √कूट् (कूट) १०/ आमन्त्रणे ( प ) सा । कुणारुम् इति—निरु. २, २, ५; ६, १, ४=क्वणः शब्दार्थः—दुर्गाचार्यः । |

आमन्त्रणम्=गूढोक्तिः—क्षी ।

| | | |
|---|---|---|
| १९६१+√कुण् (कुण) १०/१५४ | संकोचने ( आ ) अन्ये—सा । | द्र०√कूण १०/१५७ संकोचने ( आ ) । |
| १९६२+√कुण्ठ् (कुठि) १०/५० क्षी-मै-श-च-जै काक्र-कात-शा-हे-वो × | वेष्टने ( प) एके–सा । 'रक्षणे' इत्येके–सा । | > √गुण्ड् (गुडि) वेष्टने (प) । √गुण्ठ् ( गुठि ) १०/ वेष्टने ( प ) । √कुठ् १/ छेदने ( प ) सौ. धा.—वो । |
| १९६३+√कुण्ड् (कुडि) १०/४६ च ×, श | रक्षणे (प) इत्येके–क्षी क्षी-मै-सा-जै-काक्र-कात-शा-हे । रक्षे—वो । | > √गुण्ड् (गुडि) रक्षणे (प) । √गुड् ६/ रक्षायाम् ( प ) । |

संस्कृत०—कुण्डिनः=मुनिविशेषः । यथाश्वलायने–"०कुण्डिनानां वाशिष्ठमैत्रावरुणकौण्डिन्येति" ( श. क. द्रु. ); कुरुवंशीयनृपभेदः । स च धृतराष्ट्रस्य पुत्रः । यथा महाभारते १, ९४, ५८ ।

प्राकृत०—कुण्ड=आज्ञा, आदेशः—कप्प. ।

| | | |
|---|---|---|
| १९६४√कुत्स् (कुत्स) १०/१६६ च×, श | अवक्षेपणे ( आ ) क्षी-मै-सा-कात-शा। अवक्षेपे—जै-काक्र-हे,-वो ( उ )। | √कुत् १/ आस्तृतौ (प) सौ. धा. वो। अवकुत्सिते—निरु. १, ४, १४। कुत्सितम्–निरु. १,२०,५। |

भारोपीय०—√*केउएद्–, √*कुद्–, √*कूद=आक्रोशे, तर्जने–जू. पॉकर्नीः।

भारेनीय०—न. पर्सि. निकूहीदन्=आक्रोशे, कुत्सने, अपमाने–वा. पॉकर्नीः।

संस्कृत०—बृहत्कुत्समार्जुनेयं शतक्रतुः–ऋ. ८, १, ११; कुत्स्येन–४, १६, १२। कुत्सनम्–१ संध्या. २८६। कुत्सन्तो धृतराष्ट्रजम्–महाभार. २,२२९८। अभ्यकुत्सयत्–वा. रा. २,५७,२। न कुत्सयाम्यहं किञ्चित्–महाभार. ३,१३७८३।

प्राकृत०—√कुच्छ ( सक )=निन्दायाम्, धिक्कारे। कृ–कुच्छ, कुच्छणिज्ज–श्रा. २७; पण्ह. १,३।

| | | |
|---|---|---|
| १९६५√कुद् ( कुदृ ) १०/६ मै-श-च-जै-काक्र-शा-हे-वो × | अनृतभाषणे (प) इत्येके–क्षी। क्षी-सा-कात। | <√कुन्द्र् ( कुद्रि) अनृतभाषणे (प)। √कुण्ड् १०/१३ अनृतभाषणे (प) काक्र। √गुन्द्र् ( गुद्रि ) १०/ अनृतभाषणे—पारायणे—क्षी। |

द्रष्ट.—√कुन्द्र् १०/६

प्राकृत०—कुद्दण=रासकः (रासा ?)–दे. २,३८।

| | | |
|---|---|---|
| १९६६+√कुन्द्र् (कुद्रि) १०/६ काक्र-कात×,श | अनृतभाषणे ( प ) क्षी-मै-सा-च-जै-शा-हे। मिथ्योक्तौ—वो। | >√कुद् ( कुदृ ) अनृतभाषणे ( प )। >√गुन्द्र् (गुद्रि) अनृतभाषणे ( प )। √कुण्ड् १०/१३ अनृतभाषणे ( प ) काक्र। |

पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः–मनु. ३,१७४। अज्ञाते सति कुण्डमपि सुतं जनाः पत्युरेवाख्यापयन्ति। इदमनृतभाषणम्। काशकृत्स्नपठितः √कुण्ड् १०/१३ अनृतभाषणे ( प ) इति धातुर्भृशं संवदति। √कुण्ड् >√कुन्द्र् >√गुन्द्र् >√कुद् इत्येवं स्यात् प्रततिः ( विकासः )।

| | | |
|---|---|---|
| १९६७+√कुप् ( कुप ) १०/२५० च×,श (शा–√कूप्) जै–√त्रुप् [ त्रुप ] मुद्रणदोषो भाति। | भासार्थः ( प ) क्षी-शा-हे। भाषार्थः—मै सा-जै-काक्र-कात। द्युतौ—वो। | √कुप् ( कुप ) ४/ क्रोधे ( प )। √गुप् ( गुपू ) १०/ भासार्थः ( प )। |

**संस्कृत०**—[ कोपयथ पृथिवीम्—ऋ. ५,५७,३=क्रोधे । सपित्तं कोपयेद् वायुम्—सुश्रु. १,३७,८ ( क्रोधे ? ) ] ।

| | | |
|---|---|---|
| १९६८+√कुमार (कुमार) १०/३२४ शा-च × | क्रीडायाम् ( प ) क्षी-मै-सा-काकृ-कात-शा-हे । क्रीडने—जै । केलौ—वो । | कु=कुत्सितः, मारः=कन्दर्पो यस्मात् कुमारः । कु+√मृ ( मृङ् ) ६/ प्राणत्यागे ( आ ) । √कुमाल १०/३४३ क्रीडायाम् ( प ) हे । |

कुमारः क्रीडयामास उत्सङ्गे शङ्करस्य च ।
कण्ठे स्थितं वासुकिं च पाणिभ्यां समपीडयत् ।। स्क. पु. १,२७,१०७ ।

**संस्कृत०**—कुमारं माता बिभर्ति—ऋ. ५,२,१ । कुमाराणां च रक्षणम्—मनु. ७,१५२ ।

**प्राकृत०**—कुमार=प्रथमे वयसि स्थितो बालकः—ठा. १०; णाया. १,२ ।

| | | |
|---|---|---|
| १९६९+√कुम्प् ( कुपि ) १०/११५ मै-सा-शा-च-जै.काकृ-कात-शा-हे × | छादने ( प ) क्षी । स्तृतौ—वो । | > √कुम्ब् (कुबि) छादने (प) इति कौशिकः—क्षी । > √कुम्भ् (कुभि) १०/१२० छादने (प) अपरे—सा । |

**भारोपीय०**—√*कॉइ=न्युब्जत्वे, प्रह्वत्वे । √*काइ–प्–: लिथु. कुम्पि= कुब्जीभावे; कुम्पस्=अरालता । लेट्टिश्–कुम्प्त्=कौटिल्यम् । गॉथि. हम्फस्=संक्षेपे । रसन्–कुपिन=कुब्जः, कुब्जवनिका । पु. प्रशि. ऐत्कूम्प्स्=पुनः, प्रत्यग्रतः—वा. पॉकर्नीः ।

**प्राकृत०**—खुंपा=वर्षावरोधार्थं निर्मीयमाणं तृणमयमुपकरणम्—दे. २,७५ ।

**प्राकृत०**—गुम्मइ=मूर्खः—ओघ. १३६; पूरितम्—दे. २,१०३; स्खलितम्—२,१०३ ।

**बुन्देली०**—गुम्मा=मूकः, छादितवाक्कः ।

| | | |
|---|---|---|
| १९७०+√कुम्ब् (कुबि) १०/११५ च ×,श | छादने ( प ) इति कौशिकः—क्षी । क्षी-सा-जै-काकृ-शा । आच्छादने—मै-कात-हे । स्तृत्याम्—वो । | < √कुम्प् (कुपि) छादने ( प ) । शेषः पूर्ववत् । |

**भारोपीय०**—√*कॉइ–ओष्ठ्यनासिक्ययोर्विस्तारे सति—√*कुम्–भ्–, √*कुम्ब्—: नॉर्वेजियन् ( प्रादे. )–हुप्प् तथा हुम्प्=आधीन्ये, मार्दवे । इँग्लि. हम्प= कूकुदः । न. ज. हम्पे=घनत्वम्, स्थौल्यम्, शकलम् ।

**भारेनीय०**—अवे. वसुम्ब्र=कुसुम्भम् ( =कमण्डलुः ), कुम्भः । न. पर्सि. वसुम्ब्, वसुम्=कुसुम्भम्, कुम्भः—वा. पॉकर्नीः ।

**संस्कृत०**—उदीचीनकुम्बां शम्यां निदधाति–तै. प्रा. १२२। [ गाथां वा कुम्ब्यां वा–शब्रा. ११,५,७,१० ] । कुम्बिक०—बृहत्सं. १४,३० ।

**प्राकृत०**—खुम्मिय=नामितम्–णाया. १,१–पत्र. ४७ ।

**बुन्देली०**—गुम्मा=इष्टका ।

१९७१+√कुम्भ् कुभि) १०/१२० छादने (प) अपरे—सा । <√कुम्ब् (कुबि) छादने (प) ।

क्षी-मै-श-च-जै-काकृ

कात-शा-हे-वो ×

शेषः पूर्ववत् ।
कुम्=भूमिम्, उम्भ-ति=जलेन पूरयति+अच्=कुम्भः=घट ।

**भारोपीय०**—**भारेनीय०**—उदाहरणानि पूर्ववद् बोध्यानि ।

**संस्कृत०**—शतं कुम्भाँ असिञ्चतं सुरायाः–ऋ. १, ११६, ६। इभकुम्भ०–मालती-मा. ५,३२ ।

१९७२+√कुशूल (कुशूल) १०/३२२ क्रीडायाम् ( प ) कु+√शूल ( शूल ) १/रुजायाम् ( प ) ।

क्षी-सा-श-च-जै-काकृ- इत्येके—मै ।

कात-शा-हे-वो × कु+√श्वि (टुओश्वि) १/गतिवृद्ध्योः (प) ।

**संस्कृत०**—कुशूलधान्यको वा स्यात्–मनु. ४,७। आधिक्येन 'कुसूल' इति लभ्यते पाठः ।

**प्राकृत०**—कुसूल=धान्यागारम् ( पाअ. )

१९७३+√कुस्म् (कुस्म) १०/१७९ नाम्नो वा ( आ ) कु+√स्मि ( ष्मिङ् ) १/ईषद्धसने ( आ ) ।

च ×,श कुस्मयने-दुर्गस्तु—क्षी ।
क्षी-मै-सा-काकृ-कात-शा-हे ।
कुस्मितौ—जै ।
कुस्मृताविति मुद्रणदोषः ।
मतीक्षिते कुस्मितौ—वो ।
मतीक्षितम्=बुद्धिपूर्वकदर्शनम्—दुर्गादासः ।
कुस्मेति धातुर्मतिदृष्टं बुद्धयोत्पादितमर्थमाहेति च—क्षी ।

**संस्कृत०**—आकुस्मयते—मभाष्ये १,३,६२, २८९ विकुस्मयते–१,३,६२, २८९।

| | | |
|---|---|---|
| १९७४+√कुह् (कुह) १०/३४५ श × | विस्मापने ( आ ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो । | √कुह् १/३१६ a हिंसागत्योः ( प ) काकृ । कुहूः–निरु. ११, ३१ । |

**भारोपीय०**—√* ( स् ) कॉइ=छादने । √* स्कॉइध्-ः–वा. पॉकर्नीः ।

**संस्कृत०**—यत् त्वा पृच्छादीजानः कुहया कुहयाकृते–ऋ. ८,२४,३० । कुहूः–ऐब्रा. ३,४७ । कुह०–वा. रा. २,१०९,२७=माया० । जनः कुहुकुहायते–महाभार. ३,१४१२९ । कुहकम्–भा. पु. १,१,१ । कोहलो वदनप्रियः–सुश्रु. सूत्रस्थाने ४५ अध्याये=मद्यभेदः (कोहयति=विस्मापयतीति) ।

**प्राकृत०**—कुह=अनोकहः–दस. ७ ।

| | | |
|---|---|---|
| १९७५+√कूट् ( कूट ) १०/१७० च-जे-शा ×, श | आप्रदाने (आ) इति दुर्गः–क्षी । क्षी-सा । अप्रमादे—मै-हे 'अवसादने' इत्येके—सा । प्रमादे काकृ-कात । अप्रदाप्रमदोः—वो । अप्रसादे—ब्योथ.-रॉथ. । | < √कुट् ( कुट ) प्रतापने ( आ ) √कूट् १/११३h गतौ (प) काकृ । कूटः ( कूट्यते = दातुं न शक्यते स्थावरत्वात् । कर्मणि घञ् ) =गृहम् इति शब्दरत्नावली । |

अप्रदा=दानाभावः–दुर्गादासः ।

**भारोपीय०**—√*केस्ल्-,√*कोल्=कौटिल्ये–वा. पॉकर्नीः ।

**संस्कृत०**—अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः–अ. वे. ८,८,१६ । कूटयुद्धाः–वा. रा. १,२०,८—कूटम्=कपटम् ( तिल. ) ।

**प्राकृत०**— { √कूड (सक)=१–असत्यापने, २–अन्यथात्वे । कूडे-अणु. ५० टी.। √कूड (<कूटम् )=पाशः–राय.; उत्त. ५; सूअ. १,५,२ । √कूड (<कूटम् )=असत्यम्, छलयुतम्–पडि ; प्रतारणम्–सुपा. ६२७; नरकः–उत. ५ ।

| | | |
|---|---|---|
| १९७६+√कूट ( कूट ) १०/३३७ श × | दाहे ( प ) क्षी-च-जै-काकृ-शा । परिदाहे, आमन्त्रणे —मै । परीतापे–सा आमन्त्रणे—सा । दाहे आमन्त्रणे च —काकृ । | √कुण्ड् ( कुडि ) १/ दाहे ( आ ) । शेषः पूर्ववत् । |

'परिदाहे' इत्यन्ये—
सा ।
दाहे मन्त्रे—वो ।

**भारोपीय०**—पूर्ववदुदाहरणानि ज्ञेयानि ।

ऋग्वेदे√कूळ् धातुर्दाहार्थकः ? । तद्यथा-नेदीयसः कूळयातः पर्णीरुत-८, २६, १० । सुश्रुते-√कूल् दाहे । तद्यथा-(अग्निः) तासां प्राजमानो योनिमकूलयत्; अङ्गारैः खादिरैरवकूलयेत्-सुश्रु. २,३५०,१८ ।

√कुण्ड् > √कूड् ( > √कूल्) > √कूट् इति स्यात् क्रमः ।

**संस्कृत०**—कूटं स्म तृंहत्-ऋ. १०,१०२,४=पर्वतश्रृङ्गम् ( सा. ) ।

**प्राकृत०**—उदाहरणानि पूर्वधातुवत् ।

| | | |
|---|---|---|
| १९७७+√कूण् (कूण) १०/१५७ च-काक्र ×, श | सङ्कोचने ( आ ) क्षी-मै-सा-जै-कात-शा-हे । सङ्कुचि—वो । सा-काक्र । | √कुण् (कुण) १०/१५४ संकोचने (आ) अन्ये—सा । √कुण् (कुण) ६/ शब्दोपकरणयोः ( प ) |
| √कूण् (कूण) १०/३५१ | संकोचने (प) सा । सङ्कोचे—वो । | √कुण् (कुण)१०आमन्त्रणे ( प )। |
| √कूण् ( यौ. प्र. ) | ह्वि. । | आमन्त्रणम् = गूढोक्तिः—क्षी । √कूप ( कूप ) १०/दौर्बल्ये ( प ) इति त्रिलोचन इति कविकल्पद्रुमटीकायां दुर्गादासः । |

**भारोपीय०**—पूर्ववदुदाहरणानि बोध्यानि ।

**संस्कृत०**—विकूणयन्तीव मुखम्—कामसूत्रे २,५,४२=सङ्कोचयन्तीव । कूणित-सुश्रु. १,३६२,१ ।

**प्राकृत०**—√कूण ( सक )=सङ्कोचने-गउड. ।

| | |
|---|---|
| १९७८+√कृप् (कृपेः) १०/२०८ श-च × (मै-काक्र—√क्लृप् [ क्लृप् ] ) | तादर्थ्ये ( प । क्षी । अवकल्कने—मै-सा-कात-हे । अवकल्पने—काक्र-शा । यतौ चिन्ते कल्पने च—वो । जै ? |

| | |
|---|---|
| प्रयो.········ | विलापे शोके—ह्वि. |

तादर्थ्यम्=उद्देश्यविषयम् क्षी । अवकल्कनम्=पीडनम्-मै ।

**संस्कृत०**—उपकल्पितम्=वा. रा. २,१३,४=सिद्धं कृतम् (तिल.) । अकल्पयन्–महाभार. १२,३२८,८=प्रवर्तितवन्तः ( नील. ) ।

**पालि०**—कप्पेति–जातक १,६२ ।

| | | |
|---|---|---|
| १९७९+√कृप ( कृप ) १०/३१६<br>श-च × | दौर्बल्ये ( प )<br>क्षी-मै-सा-काकृ-<br>कात-शा-हे-वो ।<br>शैथिल्ये—जै । | √कृप् (कृपेः) १०/तादर्थ्ये<br>( प ) ।<br>√कृप् (कृपू) १/ सामर्थ्ये<br>( आ ) । |
| प्रयो. | विलापे, शोके—ह्वि. । | |

**संस्कृत०**—होत्राय वृतः कृपयन्नदीधेत्–ऋ. १०,९८,७; बृहस्पतिनाकृपयद्वलो गाः—१०,६८,१० । (कृपयसे–जैब्रा. १००) । कृपणम्–वा. रा. २, १२, ७२=कष्टम् (तिल.); ३, ३२, २८=दीनेभ्यः (तिल.) । कृपणः–बृहदारण्यको. ३, ८ १० [ दौर्बल्ये धा. वृत्तिः ] । पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः—भा. पु. ८,७,४० ।

**प्राकृत०**—√खिप्प ( अक )=दौर्बल्ये । खिप्पइ–संक्षि. ३५ ।

**हिन्दी०**—√कपटना (<कपलना <कल्पनम्)=संक्षेपणे, नैयून्ये । अंश-निष्कासनेनाल्पत्वे ।

| | | |
|---|---|---|
| १९८० +√कॄ १०/१७५<br>मे-सा-च-जै-काकृ-कात ×<br>( शा√कॄ [ कॄञ् ] )<br>मुद्रण-दोषः कॄङ् इत्यु-<br>चितम् । | विज्ञाने ( आ )<br>इति चन्द्रः-क्षी ।<br>क्षी-हे-वो । | <√गॄ विज्ञाने ( आ ) । |

| | | |
|---|---|---|
| १९८१ +√कॄत् ( कॄत ) १०/११३<br>श × | संशब्दने ( प )<br>क्षी-मै-सा-च-<br>कात-शा-हे ।<br>आख्याने—जै ।<br>संशब्दे—<br>काकृ-वो । | √कृत् (कृती) ७/वेष्टने<br>( प ) ।<br>√कृ (डुकृञ्) ८/करणे<br>( उ ) । |

**संस्कृत०**—नान्यासां कीर्तयाश्चन—ऋ. ७, ३७, १ । यद्रुद्रस्य कीर्तयति—तै. ६, १, ७, ८ ।

**पालि०**—√कित्त=संसद्दे–धापा. ५७९; कित्तेनि, कित्तयति–पेतवत्थु १२४ ।

**प्राकृत०**—√किट्ट ( सक )=१–श्लाघायाम्. स्तुतौ, २–वर्णने, ३–कथने । किट्टइ, किट्टेइ–आचा.; भग. ।

| | | |
|---|---|---|
| १९८२+√क्लृप् (क्लृप) १०/२०० क्षी-सा-श-च-जै-कात-शा-हे-वो× | च=अवकल्कने ( प ) मै । अवकल्पने—काकृ । | |

प्रयो. विलापे—ह्वि. ।

**संस्कृत०—**द्रष्ट. √कृप् ( कृपेः ) १०/२०८ तादर्थ्ये ( प ) इति ।

| | | |
|---|---|---|
| १९८३+√केत ( केत ) १०/३३८ श-च× | निश्रावणे ( प ) क्षी । 'निमन्त्रणे' इत्येके—क्षी,-सा । आमन्त्रणे—मैं-सा-जै-काकृ-कात-शा-हे । निश्रावणनिमन्त्रणयोः—हे । मन्त्रणे निश्रावणे—वो । | √कित् (कित) १/ निवासे रोगापनयने च (प) । √कित् (कित) ३/ ज्ञाने ( प ) । |

निश्रावणम्= समयोद्भावनम्—दुर्गादासः ।

**भारोपीय०—***कुआँइ्–, *कुई=इच्छा । पु. प्रशि. कुआइत्स्=वाञ्छा, निर्णयः, प्रवृत्तिः । गॉथि. हैदुस्=केतुः–वा. पॉकर्नीः ।

**संस्कृत०—**केतवेदस्–ऋ. १,१०४,३ । क्षात्रधर्माणमप्याजौ केतयेत् कुलजं द्विजम्–महाभार. १३,१५९६ । एकोद्दिष्टस्य केतनम्–मनु. ४,११०=निमन्त्रणम् ( मन्वर्थ. ) । केतितः–महाभार. ११,३,२७८=निमन्त्रितः ( नील. ) ।

**मुण्डारी०—**√केड़ा=आमन्त्रणे, निमन्त्रणे ।

| | | |
|---|---|---|
| १९८४+√क्रथ् ( क्रथ ) १०/१३ मै-श-च-जै-काकृ-कात-शा-हे× | प्रतिहर्षे ( प ) इति नन्दी—क्षी । क्षी-वो । 'अतिहर्षे' इति बहवः—सा । 'प्रस्थाने' इति मैत्रेयः—सा । प्रसादे, आनन्दे—ह्वि. । | < √श्रथ् (श्रथ) प्रतिहर्षे ( प ) । |

'क्रथिमपि केचिदत्र (१०/१३) पठन्ति स मैत्रेयादौ न दृश्यते' इत्युक्त्वा नैनं सायणोऽनुमोदते धातुम् । ह्विट्नीः संदिग्धार्थानि संज्ञारूपाण्युपस्थापितवान् तान्येतदर्थकानि मया नाधिगतानि ।

| | | |
|---|---|---|
| १९८५+√क्रथ् ( क्रथ ) १०/२७५ श-च× | हिंसायाम् ( प ) आधृषाद्वा क्षी-मै-सा-जै-काकृ-कात-शा-हे । वधे—वो । प्रसादे, आनन्दे—प्रयो. ह्वि. । | √क्रंश्–निरु. २,२५ । √क्रथ् ( क्रथ ) १/ हिंसार्थः ( प ) मित्—द्र. । √क्लथ् ( क्लथ ) १/ हिंसार्थः (प) मित्–द्रष्ट. । |

**संस्कृत०**—जासिनिप्रहणनाटक्राथपिषां हिंसायाम्–पा. अ. २,३,५६ । द्रष्ट. √क्रथ् ( क्रथ ) १/७९३ ।

| | | |
|---|---|---|
| १९८६+√क्रन्द् (आङः क्रन्द) १०/१९५ श ? च-जै-शा× | सातत्ये ( प ) । क्षी-मैं-सा-काकृ-कात-हे । शब्दसातत्ये—वो । | |

√घुष् ( घुषिर् ) १०/१९४ विशब्दने ( प ) इत्यस्माद् 'विशब्दने' इत्यस्यानुवृत्तौ 'विशब्दन-सातत्ये' इति योजनीयमिति वागीशः ।

आ क्रन्दय बलमोजो न आ धाः–ऋ. ६,४७,३० । आ क्रन्दय धनपते—अ. वे. २,३६,६ । पुरुषानाक्रन्दयतः–शब्रा. ११,६,१,६; वा. मं. १६,१९ । मुहुराक्रन्दयिष्यतः–भा. पु. ३,१४,३८ ।

| | | |
|---|---|---|
| १९८७+√क्लप् (क्लप) १०/१२३ क्षी-मै,-श ?-च-जै-काकृ-कात-शा-हे-वो× | व्यक्तायां वाचि (प) इत्येके—सा । | √लप् (लप) १/ व्यक्तायां वाचि ( प ) । |

**हिन्दी०**—√कलपना ( <क्लपनम् )=विलापे, दुःखोदन्तमनुचिन्तमनुचिन्तमुक्त्वोक्त्वा वा रोदने । * कल्पने ।

| | | |
|---|---|---|
| १९८८+√क्लव् ( क्लव ) १०/३८५ मै-श-च-जै-काकृ-कात-शा× | ..........( आ ) क्षी-सा-हे× भये—वो । | √क्लु ( क्लुङ् ) १/ गतौ (आ) इत्येके–मै । क्रु ( क्रुङ् ) १/ गतौ ( आ ) इति क्वचित् पठ्यते–सा । |

**संस्कृत०**—त्रिक्लवं दूतमासाद्य–वा. रा. ५,२,३७ = कातरमविमृश्यकारिणम् (ति.) । वैक्लव्यम्—वा. रा. ५,२,३९=बुद्धिहीनता (ति.) । व्यथितो विक्लवश्चैव—वा. रा. २, १२,४=दीनः (ति.) ।

| | | |
|---|---|---|
| १९८९+√क्षञ्ज् ( क्षजि ) १०/८४ श | कृच्छ्रजीवने ( प ) क्षी-मै-सा-च-जै-काकृ- | √खञ्ज् ( खजि ) १/ गतिवैकल्ये ( प ) । |

कात-शा-हे । √खज् ( खज ) १/ मन्थे
तङ्के —वो । ( प )
प्राकृत०—√खंज (अक) =गतिवैकल्ये-कप्पू. ।

**भारोपीय०—**√* स्कॆंज्=गतिवैकल्ये, तङ्के । स्वीडिश्-स्किक्=तङ्के; पु. आइस्. ह्रिक=तङ्के-वा. पॉकर्नीः ।

१९९०+√क्षप ( क्षप ) १०/३८५ प्रेरणे ( प ) क्षपा ( निघ. १,७ )
श-च-जै-काकृ-कात-शा × क्षी-मै-सा-हे । √छम्प् ( छपि ) १०/ गत्याम् ( प ) ।
√क्षप् (क्षप) १/८०३ k; क्षेपे—वो ।
भोजः १,१,१९२— मित्त्वम् । √क्षम्प् ( क्षपि ) १०/ क्षान्त्याम् ( प ) ।
मै-श-च-जै-काकृ-कात- संयमित्वे (उ)-ह्वि. ।
शा-वो × ( हे ) उपवासे (उ)-ह्वि. । √क्षिप् ( क्षिप ) ४/६ प्रेरणे ( प ) ।

**भारोपीय०—*** क्ज़्सॆप्-( ? )=क्षपा, अन्धकारः ।

**भारेनीय०—**अवे. क्षप्=अन्धकारः-वा. पॉकर्नीः ।

**संस्कृत०—**क्षपयित्वा-ब्रसू. ४,१,१९ । क्षपय-वनदुर्गो. ४५९:१८ । संक्षपितोदकः-वा. रा. २,४८,३७=क्षीणोदकः (तिल.) । कालं क्षपयित्वा-महाभार. १२,२७९, १८=नीत्वा (वाहयित्वा) । क्षपेयुस्त्र्यहमेव च-मनु. ५,६९=त्र्यहाशौचं कुर्यात् (मन्वर्थ.); कामं तु क्षपयेद् देहम्-मनु. ५,१५७=क्षीणं कुर्यात् ( मन्वर्थ. ) । क्षपणः-शांआ. १२,७; महाभार. १,३,१२=संन्यासी । क्षपणं त्र्यहम्-मनु. ४,२२२=उपवासः ( मन्वर्थ. ) । क्षपिता-रघु. ८,४७=नाशिता ( संजी. ) । वैदेही बत मे प्राणान् शोचन्ती क्षपयिष्यति-वा. रा. २,१२,७२=नाशयिष्यति ।

**प्राकृत०—**√खव (सक)=नाशे, (२) प्रेरणे, क्षेपे, (३) उल्लङ्घने । खवेइ-उव. ।

**हिन्दी०—**√खपना, √खपाना ( <क्षपणम् )=केनापि प्रकारेण व्यये, ( २ ) निर्वाहे, ( ३ ) नाशे ।

१९९१+√क्षम्प् (क्षपि) १०/८३ क्षान्त्याम् (प) √क्षम् ( क्षमूष् ) १/ सहने ( आ ) ।
श-कात × क्षी-मै-सा-जै-शा ।
क्षान्तौ—च-काकृ । √छम्प् (छपि) १०/ गत्याम् ( प ) ।
हे ?
शक्तौ—वो । √कम्प् १०/३५ c क्षान्तौ ( प ) काकृ ।

√चम्प् १०/३५ d क्षान्तौ (प) काक्ट।
√सम्प् १०/३५ e क्षान्तौ (प) काक्ट।
√क्षज् १०/२८ क्षान्तौ (प) कात।

शक्ति:=इह क्षमा–दुर्गादासः।

हिन्दी०—√झाँपना=आवृतौ, व्यवधाने; (२) क्षान्तौ, लज्जायाम् ( √'झेंपना' इति हिन्दी )।

| | | |
|---|---|---|
| १९९२√क्षल् ( क्षल ) १०/६१ श | शौचकर्मणि (प) क्षी-मैं-सा-जै-शा। शौचे—च-काक्ट-कात-हे-वो। प्रक्षालने—ह्वि.। | √क्षल् ( क्षल ) १/ संचये, च=संचलने (प)। √क्षर् ( क्षर ) १/ संचलने (प)। |

भारोपीय०—√* गुह्ऐर् ( अथवा-गुअर ?? )=प्रवाहे, धावने।

भारेनीय०—अवे.–ग्ज़ु रैति=क्षरति। ग्ज़ारयेइति=क्षालयति–बा. पॉकर्नीः।

संस्कृत०—प्रक्षाल्य पाणी–शब्रा. १४,९,३,१३। क्षालयन्ति–रुद्रो. २७। क्षालयेत्–जाबालदर्शनो. ५,१४।

प्राकृत०—√खाल ( सक )=प्रक्षालने। क्ट–खालणिज्ज–उप. ३२६।

हिन्दी०—√पखारना (<प्रक्षालनम् )=शौचकर्मणि।

हिन्दी०—{ √खँगारना † / √खँघारना † / √खँगालना } =( <स्वयम्भूरनुस्वारः <खगालना <खकालना <षकालनम् <क्षालनम् )=मनाक् प्रक्षालने, (२) सर्वस्वापहरणे।

हिन्दी०—√पछारना=१. प्रक्षालने; २. विपोथने।

| | | |
|---|---|---|
| १९९३+√क्षोट् (क्षोट) १०/३१९ क्षी-श-च-जै-काक्ट-कात-शा-हे-वो × | क्षेपे (प) मै-सा। | √खोट् (खोट) १०/ भक्षणे (प) मैं। √खोट्ट १०/२०८ क्षेपे (प) काक्ट। √खोड ( खोड ) १०/ क्षेपे (प) |

प्राकृत०—
अपभ्रंश०— { √छोड ( <क्षोटनम् )=क्षेपणे, उन्मोचने। छोड़इ, छोडेइ–भवि.; महा.। संक्ट–छोडिवि–सुपा. २४९।

हिन्दी०—√छोड़ना=प्रेरणे, क्षेपे, उन्मोचने।

| | | |
|---|---|---|
| १९९४+√खट्ट् (खट्ट) १०/९२ शx | संवरणे (प) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। वृतौ—वो। | √कट् (कटे) १/ वर्षावरणयोः (प)। √ऋ.ष् १/६७६ a संवरणे (उ) काकृ; ५८५ a कात। √खुड् (खुड) ६/ संवरणे (प) इत्येके–मै। √छुड् (छुड) ६/ संवरणे (प) इत्येके–मै। √छद् (छद) १०/ संवरणे (प)। |

हिन्दी०—खटिया (<खट्टिका—शब्दमाला)=शवयानम्।

हिन्दी०—खटीक (<खट्टिकः–शब्दमाला। खट्टनम्=आवरणम्–खट्टः, स शिल्पत्वेनास्यास्तीति [ठन्])=शाकुनिकः।

| | | |
|---|---|---|
| १९९५+√खड् (खड) १०/४४ श | भेदे (प) क्षी-च-जै-काकृ-कात-शा-हे-वो। भेदने—मै-सा। | √खण्ड् (खडि) १०/भेदे (प) √कण्ड् (कडि) १०/भेदे (प) इत्येके–क्षी। √कड् १०/३८ c भेदे (प) काकृ। |

भारोपीय०—√*केल्, √*केला=ताडने, नाशे। ड्–विस्तारः–वा. पॉकर्नीः।

संस्कृत०—खड्रेऽधिचक्रमां खर्विकां खर्ववासिनीम्–अ. वे. ११,९१६। खड्गः=अस्त्रविशेषः–महाभार. ४,४१,२५ (खडति=भिनत्तीति (उणा. १,१२३) इति गन्)। खड्गः=गण्डकः। यथाह मनुः—३,२७२।

| | | |
|---|---|---|
| १९९६+√खण्ड् (खडि) १०/४५ वो×,श | भेदे (प) क्षी-च-जै-काकृ-कात-शा-हे-वो। भेदने—मै-सा। | >√कण्ड् (कडि) भेदे (प) इत्येके–क्षी। √खड् (खड) १० / भेदे (प)। √खण्ड् (खडि) १/मन्थे (आ)। |

**संस्कृत०**—आखण्डल०-ऋ. ८,१७,१२। अवखण्डयति-बृहदारण्यकोप. ५,७। खण्डयेत्-पै. ४,२२।

**पालि०**--वेतनं खण्डेत्वा-जातक ३,१८८।

**प्राकृत०**—√खंड (सक)=खण्डने, भेदने,। कवकृ-खंडिज्जंत-से. १३,३२; सुपा. १३४। हेकृ-खंडित्तए-उवा ; कृ-खंडियव्व-उप. ७२८ टी.।

**मुण्डारी०**—√खांडा=खण्डने। खड्गः।

| | | |
|---|---|---|
| ११९७+√खुण्ड् (खुडि) १०/४८ मै-श-च-जै-काकृ-कात-शा× | खण्डने (प) क्षी-सा-हे। भेदे—वो | ध्वनिसादृश्यानि पूर्वधातुवत्। √खुर् (खुर) ६/ खण्डने (प) मै। |

**प्राकृत०**—√खुड (सक)=खण्डने। खुडेंति-से. ८४८; वकृ-खुडंत-स. ११३।

**प्राकृत०**—√खुट्ट (सक)=खण्डने। खुट्टइ-नाट-साहित्य. २२९; खुट्टंति-उव.।

**हिन्दी०**—√खूंदना (<खुण्डनम्)=पादैर्मर्दने, मर्दयित्वा विकृतौ, (२) कुट्टने।

**बुन्देली०**—√खोंटबो (<खुण्डनम्)=खण्डने।

**हिन्दी०**—√खूंटना (<खुण्डनम्)=खण्डने।

| | | |
|---|---|---|
| ११९८+√खेट (खेट) १०/३२१ श-च-शा × | भक्षणे (प) क्षी-मै-सा-जै-काकृ-कात-हे-वो। | >√खेड (खेड) भक्षणे (प) इति दौर्गाः-क्षी। √खिट् (खिट) १/उत्त्रासे (प)। √खोट् (खोट) १०/भक्षणे (प) इत्येके-सा। |

**भारोपीय०**—√*स्कॆर्-√*कॆर्=छेदने। अल्बे. केत्=कर्तरिका-वा. पॉकर्नीः।

**हिन्दी०**-खेट=(<खेटम्=तृणम्-शब्दरत्नावली)=तृणकः।

**हिन्दी०** -खेटकी = 'भड्डरी' इति हिन्दी। "कोई पूछै चेटकीन, कोई पूछै खेटकीन"-रघुराजः।

| | | |
|---|---|---|
| ११९९+√खेड (खेड) १०/३२१ मै-श-च-जै-काकृ-कात × | भक्षणे (प) इति दौर्गाः-क्षी। क्षी-सा-शा-हे-वो। | <√खेट (खेट) १०/ भक्षणे (प)। √खेण् १/२१३ g गतौ (प) काकृ। शेषः पूर्ववत्। |

| | | |
|---|---|---|
| २०००+√खोट (खोट) १०/३१८ क्षी-श-च-जै-काकृ-कात-शा-हे-वो × | भक्षणे (प) इति च —मै । मै-सा । | < √खेट (खेट) १०/ भक्षणे (प)। √खोट् १/ गत्याघाते (प) वो । √खोट्ट १०/२०८ क्षेपे (प) काकृ । |
| २००१+√खोट (खोट) १०/३२२ मै-सा-श-च-काकृ-शा× | क्षेपे (प) इति पाठभेदः—क्षी । क्षी-जै-कात-हे-वो । | √क्षोट (क्षोट) १०/ क्षेपे (प) मै । √खोद (खोद) १०/ क्षेपे (प)। √खोड (खोड) १०/ क्षेपे (प)। √खोट्ट १०/२०८ क्षेपे (प) काकृ । |

हिन्दी०—खोट ( < खोटः )=दोषः । "सूरदास पारस के परसे मिटत लोह की खोट"—सूरदासः ।

हिन्दी०—खोड़ा ( < खोटः ) भूतप्रेतादिकोपः ।

| | | |
|---|---|---|
| २००२+√खोड (खोड) १०/३२२ मै-सा-श-च-जै-काकृ-कात × | क्षेपे (प) क्षी-शा-हे-वो । | > √खोट (खोट) क्षेपे (प) । √खोड् १/ खोटने (प) वो । √खोल् १/ खोटने (प) वो । |

हिन्दी०—खोड़ा ( < खोडः )=भूतप्रेतादिकोपः ।

हिन्दी०—खोंड़ा ( < खोडः )=दूषितम् ।

| | | |
|---|---|---|
| २००३+√खोद (खोद) १०/३२२ मै-सा-श-च-जै-काकृ-कात-शा-वो × | क्षेपे (प) इति पाठभेदः–क्षी । क्षी-हे । | < √खोड (खोड) क्षेपे (प)। |

सुस्पष्टो विकासः–√खोट > √खोड > √खोद इति ।

हिन्दी०—√खोदना ( < खोदनम् ) = प्रेरणे, क्षेपे । खननादस्य व्युत्पत्तिः क्लिष्टकल्पनात्मिका ।

३

| | | |
|---|---|---|
| २००४+√गज् (गज) १०/१०७ मै-श-च-जै-काकृ-कात × | शब्दार्थः ( प ) क्षी-सा । शब्दे—शा-हे । स्वने—वो । | द्रष्ट.√गज् (गज) १/ शब्दार्थः ( प )। |

हिन्दी०—गच=कस्मिंश्चिन्मृदुवस्तुनि कस्यचन निशितवस्तुनः प्रवेशशब्दः ।

| | | |
|---|---|---|
| २००५+√गण (गण) १०/२९९ श | संख्याने ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो । | √कल् ( कल ) १/ शब्दसंख्यानयोः ( आ ) । √कल ( कल ) १०/ गतौ संख्याने च ( प ) । |

भारोपीय०—√*गेर्=ग्रहणे–वा. पॉकर्नीः ।

संस्कृत०—मारुतं गणम्–ऋ. १,१४,३; ओगणासः–१०,८९,१५ । गणयाञ्चकार–जैब्रा. १८१ । सोऽहं न गणयाम्येनान्–महाभार. ३,१५५२ । गणयामि न ते कृते–महाभारते विराट. १८,४ श्लोकानन्तरं पाठभेदः ।

पालि०—गणेति–धम्मपद १९; जातक ६,३३४ ।

प्राकृत०—√गण ( सक )=गणने, २–आदृतौ, ३–अभ्यासे, ४–पर्यालोचने । गणइ, गणेइ–कुमा.; महा. ।

प्राकृत०—√गिण ( सक )=गणने । गिणंति–सट्ठि. ९७ ।

हिन्दी०—{√गनना†, √गिनना}( < गणनम् )=संख्याने ।

| | | |
|---|---|---|
| २००६+√गद (गद) १०/३०७ श × | देवशब्दे ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा । गर्जे—हे । अभ्रध्वनौ—वो । | √गद् ( गद ) व्यक्तायां वाचि ( प ) । √गध् ४/ मिश्रीभावे–निरु. ५,१५ । आगधिता परिगधिता–ऋ. १,१२६,६ । |

संस्कृत०—गदा–महाभार. ९,५६,४५ (गदयति=पीडयत्यनया)=स्वनामख्यातलौहमयास्त्रम् । (गदायते अश्वः–शब्रा. १२,४,१,१०) ।

| | | |
|---|---|---|
| २००७+√गन्ध् (गन्ध) १०/१५३ ( श ) च-जै × | अर्दने ( आ ) क्षी-मै-सा-काकृ-कात-शा-हे । द्रुहि—वो । | √गण्ड् ( गडि ) १/ वदनैकदेशे ( प ) । गध्यति–निरु. ५,१५ । |

**भारोपीय०**—√* ग्‌ऌऐध्=प्रेरणे, ताडने, पीडने।

**भारेनीय०**—अवे. गन्तय्=दौर्गन्ध्यम्। म. पर्सि.; न. पर्सि. गन्द्=दौर्गन्ध्यम्; गन्दक्=पूतिगन्धि, मलिनम्। पु. पर्सि. गस्त=जुगुप्सितम्।

**संस्कृत०**—गन्धो अस्ति–ऋ. १,१६२,१०। त्वं गन्धेन विनाशय–अ. वे. ८,६,१०। गन्धन०–सुश्रु. १,७७,९=हिंसा०। गन्धयति–अ. कौशि. सू. ११५। गन्धर्वः–ऋ. ९,८३,४।

**प्राकृत०**—गंध=वासः–औप.; भग., (२) देवजातिविशेषः–इक.।

**हिन्दी०**—√गंधाना†=वासे, दौर्गन्ध्ये।

२००८+√गर्ज् (गर्ज) १०/१०७ शब्दे (प) √गर्ज् (गर्ज) १/ शब्दे (प)।
क्षी-सा-च-शा-हे ×, श मै-जै-काकृ।
शब्दार्थे—कात।
स्वने—वो।
कलकलध्वनौ—काकृ।

द्रष्ट. √गर्ज् (गर्ज) १/ शब्दे (प)।

२००९+√गर्ज् (गर्ज) १०/१२५ शब्दे (प) इत्येके—क्षी। <√गर्द् (गर्द) शब्दे (प)।
मै-श-च-जै-काकृ-कात-शा × क्षी-सा।

२०१०+√गर्द् (गर्द) १०/१२५ शब्दे (प) >√गर्ज् (गर्ज) शब्दे (प) इत्येके—क्षी।
मै-श-च-जै-काकृ-कात-शा × क्षी-सा-हे।
रवे—वो।

**हिन्दी०**—√गरदानना (फा.–गरदान)=शब्दरूपसाधने, (२) असकृत् कथने, अभ्यासे। गणने, अवगमने।

२०११+√गर्ध् (गर्ध) १०/१२६ अभिकाङ्क्षायाम् (प) √गृध् (गृधु) ४/ अभिकाङ्क्षायाम् (प)।
(श)च × (कात–√गर्द्) क्षी-मै-सा-काकृ-कात-शा-हे।
अभिकाङ्क्षणे—जै।
लिप्से—वो।

**भारोपीय०**—√*घेल्ध्=अभिकाङ्क्षायाम्। गॉथि. ग्रेदुस्=गर्धः (बुभुक्षा); पु. च. स्लावो. ग्लद=गर्धः–वा. पॉकर्नीः।

२०१२+√गर्व ( गर्व ) १०/३५१ माने ( आ ) √गॄ ६/ निगरणे ( प )।
श; ( शा-√गर्व् [ गर्व ] ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। √गल् ( गल ) १/ अदने ( प )।
दर्पे—वो।

**संस्कृत०**—( स्तौति गर्वायते चापि-महाभार. १२,१०३०० )।

२०१३+√गर्ह् ( गर्ह ) १०/२९२ विनिन्दने ( प ) द्रष्ट.√गर्ह् ( गर्ह ) १/ कुत्सने ( आ )।
श-च × आधृषाद्वा।
क्षी-मै-सा-जै-काकृ-कात-शा-हे। √गल्ह् ( गल्ह ) १/ कुत्सने ( आ )।
कुत्सने—वो।
प्रयो. द्वि.।

**संस्कृत०**—न गर्हयेयुरस्मान् वै-महाभार. १,५७३१। दुष्कृतं कर्म गर्हति-मनु. ११,२२९=निन्दति ( मन्वर्थ. )।

२०१४+√गल् ( गल ) १०/१५८ स्रवणे ( आ ) √गल् (गल) १/ स्रवणेऽपि ( प )।
मै-श-च-जै-काकृ-कात-शा × क्षी-सा।
स्रावणे—हे। √गल् १/२४७ x गतौ ( प ) काकृ।
स्रावे—वो।
प्रयो. द्वि। √गल्ल् १/२४७ y गतौ ( प ) काकृ।

**संस्कृत०**—तौ भागौ तत्कषायेण गालयेत्-सुश्रु. १, १६६, ६; अवीमूत्रगालितः-२, ५४, ९।

**पालि०**—( गळयति=अश्रुविमोचने-सुत्तनिपात ३९१ )।

**प्राकृत०**—√गाल ( सक )=( १ ) स्रावणे, ( २ ) नाशे, ( ३ ) उल्लङ्घने। गालयइ-विसे. ६४।

२०१५+√गवेष (गवेष) १०/३३० मार्गणे ( प ) गो+√इष् > √एष्=√गवेष.।
श क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। √गेष् ( गेषृ ) १/ अन्वेषे ( आ ) वो।
√ग्लेष् (ग्लेषृ) १/ अन्विच्छायाम् ( आ )।

**संस्कृत०**—गवां गवेषणपरा–ऋ. १, ६, ५। गवेषते–शब्रा. १३, १, ४, ३। गवेषयन्–महाभारते ३,१५५८। गवेषय–कथासरि. २४,२३०।

**पालि०**—गवेसति–धम्मपद १४६ ( गवेस्सथ ); थेरगाथा १,१८३।

**प्राकृत०**—√गवेस ( सक )=मार्गणे। गवेसइ–महा.।

२०१६+√गालोड (गालोडित) १०/३८९ ············(प) >√कालोड ( कालोडित ) इति गुप्तः—क्षी। अङ्कलोडित–, >अङ्गलोडित–, >गलोडित–, >गालोडित।
शा-जै-शा-हे-वो ×

**संस्कृत०**—"उन्मादशीले रोगार्त्ते मूर्खे गालोडितः स्मृतः"–इति दुर्गसिंहकृत-कलापवृत्तिटीकायां त्रिलोचनदासः। गोलोहितोऽपि पाठः। ( गाः = इन्द्रियाणि, आलोड्यन्तेऽनेनेति गालोडः सोऽस्त्यस्य )। गालोड्यम् = पद्मबीजम्—राजनिर्घ.। गालोडितम्=वाचां विमर्शः–सेंटपीटर्सबर्गसंस्कृतशब्दकोशः। वागालोडित>गालोडित इति वागीशः।

**प्राकृत०**— कारोडिय ( <करोटितः )=कापालिकः, ( २ ) ताम्बूलवाहकः–औप. ]।

२०१७+√गुण (गुण) १०/३४० आमन्त्रणे ( प ) क्षी-मै-सा-काक-कात-शा-हे। मन्त्रे—वो। √कुण ( कुण ) १०/ आमन्त्रणे ( प )। √गोण् १/२१३ J गतौ ( प ) काक।
शा-च-जै ×

**भारोपीय०**—√*गेर्=वेष्टने, परिवर्तने। ( *गृ–नो–स् )=गुणः।

**भारोपीय०**—√*गेल्=दार्ढ्येन ग्रहणे-वा. पॉकर्नीः।

**संस्कृत०**—गुणयति–बृहत्सं. ८,२०। गोणी–यशस्ति. च., ३ आ., १९८ पृ.= चर्ममयाच्छादनम्।

**पालि०**—गोण=उक्षा–जातक ६,५३८।

**प्राकृत०**—√गुण (सक)=गणने, (२) आवृत्तौ। गुणइ–सूक्त. ५१। गुणेइ–उव.।

**हिन्दी०**—गून ( <गुणः )=रज्जुः, यया नावाद्याकृष्यते।

**बुन्देली०**–गूना=लूनसपलालधान्यबन्धनार्थं नातिवेष्टिता काशादितृणमयी रज्जुः।

२०१८+√गुण्ट् (गुठि) १०/४७ वेष्टने ( प ) क्षी-हे। वेष्टे—वो। प्रयो. आच्छादने—ह्वि.। √कुण्ट् (कुठि) १०/ वेष्टने ( प ) सा। √कुण्ड् (कुडि) १०/ रक्षणे इत्येके–क्षी।
मै-सा-श-च-जै-काक-कात-शा ×

√गुण्ड् (गुडि) १०/ वेष्टने (प)।

√गुण्ठ् १/१२१ c शोषणे (प) च।

√गुण्ठ् १/१४४ आलस्ये (प) काकृ।

संस्कृत०—कालपाशेन गुण्ठिताः-महाभार. ६,८१९। तदवगुण्ठयाम्यात्मानम्-मृच्छ. ३३,१२।

पालि०—गुण्ठित-सुत्तनिपात १३१।

प्राकृत०—गुठिअ=आच्छादितम्, व्याप्तम्-दे. १,८५।

हिन्दी०— { √ग्वैंठना*† / √गुमेठना } (<गुण्ठनम्)=वेष्टने, परिवर्तने। √गोंठना=पक्वान्नादेः प्रान्तभागवेष्टने।

२०१९+√गुण्ड् (गुडि) १०/५० वेष्टने (प) क्षी-श-च-जै-शा × मै-सा-काकृ-कात। वेष्टने रक्षणे च—हे। वेष्टे रक्षे च वो।

√कुण्ठ् (कुठि) १०/ वेष्टने (प) सा।

√गुण्ठ् (गुठि) १०/वेष्टने (प)।

√गुण्ड् १/१८३n हिंसागत्योः (प) काकृ।

संस्कृत०—गुण्डन०=गुण्ठन०-प्रबोधचन्द्रो. ३०,१७।

प्राकृत०—गुण्डण=धूलिलेपः-णाया. १,१-पत्र. ७१।

मराठी०—√गुण्डाळने=वेष्टने।

हिन्दी०—गोंड़ा=गोष्ठम्, परिवेष्टितं स्थानम्।

बुन्देली०— { √गुड़याबौ=कुण्डल्याकारेण परिवर्तने। / गुड़ी = वली। }

२०२१+√गुण्ड् (गुडि) १०/४६ रक्षणे (प) क्षी-सा। वेष्टने रक्षणे च—हे। वेष्टे रक्षे च—वो।

√गुड् (गुड) ६/. रक्षायाम् (प)।

√कुण्ठ् (कुठि) १०/ रक्षणे (प) सा।

√कुण्ड् (कुडि) १०/ रक्षणे (प) इत्येके—क्षी।

प्राकृत०—गुण्डिअ=आच्छादितम्, प्रावृतम्-आचा., प्रेरितम्-पण्ह. १,३।

हिन्दी०—पूर्ववदुदाहरणानि बोध्यानि। वेष्टनेन रक्षणं सम्पद्यत इति वेष्टनपूर्वकरक्षणत्वादुभयोर्धात्वोरैक्यम्।

| | | |
|---|---|---|
| २०२१+√गुन्द्र् (गुद्रि) १०/६ मै-सा-श-च-जै-काकृ-कात-शा× | अनृतभाषणे (प) पारायणे—क्षी। क्षी-हे। कुन्द्रे—वो। | <√कुन्द्र् (कुद्रि) अनृतभाषणे (प)। <√कुद् (कुदृ) अनृतभाषणे (प)। √कुण्ड् १०/१३ अनृतभाषणे (प) काकृ। |

कुन्द्रः=मिथ्योक्तिः—दुर्गादासः।

**संस्कृत०**—सगुन्द्राः काशाः कुशा वा—बृहत्सं. ५३,१०१, (१०२)। गुन्द्रः=वृक्षविशेष इति भावप्रकाशः (श.क.द्रु.)।

**प्राकृत०**—गुंद (<गुन्द्रः)=वृक्षविशेषः (पाअ.)

| | | |
|---|---|---|
| २०२२+√गुप् (गुपू) १०/२४९ मै-सा-च-जै-काकृ-शा-हे-वो×,श | भासार्थः (प) क्षी। भाषार्थः—कात। | √गुप् (गुपू) १/ रक्षणे (प)। |
| २०२३+√गुप् (गुप) १०/२३४ | भाषार्थः—मै-सा-जै-काकृ। भासार्थः—शा-हे। भासि—वो। | |
| २०२४+√गुर् (गुरी) १०/१६० क्षी-मै-श-च-जै-कात-हे-वो× | 'उद्यमने' क्वचित् पठ्यते—सा। सा-शा। तदात्रेयविरोधादुपेक्ष्यम्—सा। उद्यमे—काकृ। | |
| २०२५+√गुर्द् (गुर्द) १०/१२७ मै-श-च-काकृ-कात× | पूर्वनिकेतने (प) क्षी-सा-जै-शा-हे। निकेतने—क्षी-सा-हे-वो। निकेतने कूर्दे—वो। | गूर्द्धयति—निघ. ३, १४=अर्चतिकर्मा। |

पूर्वनिकेतनम्=आद्यनिवासः—क्षी। 'आसाद्याभ्यवहारः' इति क्षीरनाम्ना सायण उद्धृतवान्।

**हिन्दी०**—गुर्द (फा.)=गुर्दस्थान—(गुर्दिस्थान)—निवासी।

**हिन्दी०**—गुर्दिस्थान (<गुर्दस्थानम्)=फारसदेशस्य तस्मादुत्तरस्यां प्रदेशः, यस्यैषद्भागः सम्प्रति रूमराज्यान्तरायाति। कुर्दिस्तानत्वेनाप्ययमभिधीयते जनैः।

| | | |
|---|---|---|
| २०२६+√गूर् (गूरी) १०/१६३ मै-च-जै-काकृ-कात-शा-हे-वो×,श √गूर् (गूर) १०/१५५ | उद्यमे (आ) क्षी । उद्यमने—सा । उद्यमने—मै-सा । उद्यमे—कात-हे-वो । जै ? | √गुर् (गुरी) ६/ उद्यमे (आ)। |

| | | |
|---|---|---|
| २०२७+√गृ १०/१७३ क्षी-मै-च-काकृ-हे-वो×,श | विज्ञाने (आ) सा-कात । विज्ञापने—जै-शा । | √कॄ १०/ विज्ञाने (आ)। √गॄ १०/ विज्ञाने (आ)। |

संस्कृत०—द्रष्ट.√गॄ १०/१७५ ।

| | | |
|---|---|---|
| २०२८+√गृह (गृह) १०/३४३ श×(जै–√ग्रह् [ग्रहै]) स्यान्मुद्रणदोषः । | ग्रहणे (आ) क्षी-मै-सा-जै-काकृ-कात-शा-हे । प्रग्रहणे—च । ग्रहे—वो । | √ग्रह् (ग्रह) ९/ उपादाने (उ)। √गृह् (गृहू) १/ ग्रहणे (आ)। √ग्लह् (ग्लहू) १/ ग्रहणे (आ)। √ग्रस् (ग्रस) १०/ ग्रहणे (प)। |

| | | |
|---|---|---|
| २०२९+√गॄ १०/१७५ सा-श-च-जै-कात-शा× | विज्ञाने (आ) क्षी-मै-काकृ-हे विज्ञाने विज्ञापे च—वो । | >कॄ विज्ञाने (आ) इति चन्द्रः—क्षी । |

हिन्दी०—√गारना ( वाक्शैली )=तपस्यायाम् । तपसश्च ज्ञानविज्ञाने भवतः—"तब तन गारि बहुत श्रम कीन्हों"–सूरदासः ।

| | |
|---|---|
| २०३०+√गोम (गोम) १०/३२३ श-च× | उपलेपने ( प ) क्षी-मै-सा-जै-कात-शा-हे । ( उपक्षेपे—जै, मुद्रणदोषः )। उपलेपे—काकृ । लेपे—वो । |

प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वात् कस्मिंश्चित् काले गोमाद् गोमयसिद्धिः । अद्यत्वे तु–'गोश्च पुरीषे' ( ४,३,१४५ ) मयट् । एवं कुमारादावनुमन्तव्यम्–क्षी ।

संस्कृत०—गोमाय०–ऋ. १०,६२,२=वसु० । ह्लद०–वा.रा. २,६९,८ । तासु गोमयानि च शुम्बलानि–शब्रा. १२,५,२,३ ।

संस्कृत०—√गूमना1=परिवेष्टने, वेष्टने ।

| | | |
|---|---|---|
| २०३१+√ग्रन्थ् (ग्रन्थ) १०/२६७ क्षी-श-च-जै-काकृ-शा-हे × | बन्धने (प) आधृषाद्वा । मै-सा । बन्धने हिंसायां च—कात । | √ग्रथ् १०/३२८ बन्धने (प) जै; १०/२४६ शा । ग्रथयति–सार. २७१:८ । ग्रथनम्–महो. ३,११ । |
| प्रयो. | ह्वि. । | |

| | | |
|---|---|---|
| २०३२+√ग्रन्थ् (ग्रन्थ) १०/२८५ श-च × | सन्दर्भे (प) आधृषाद्वा क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । दर्भे—वो । | |

संस्कृत०—ग्रन्थन्ति—सार. २७४:२ ।

| | | |
|---|---|---|
| २०३३+√ग्रस् (ग्रस) १०/२१६ श-च-जै-शा × | ग्रहणे ( प ) क्षी-मै-सा-काकृ-कात-हे । ग्राहे—वो । | √ग्रस् (ग्रसु) १/अदने ( आ ) । √ग्लस् (ग्लसु) १/अदने ( आ ) । |
| प्रयो. | ह्वि. । | √ग्रह् (ग्रह) ९/उपादाने ( उ ) । |

संस्कृत०—ग्रासयति (प्रयो.)-शब्रा॰ १२,४,१,१२; कात्या. श्रौ. २५ ।

प्राकृत०—√गाह ( सक )=ग्रहणे । गाहेइ–औप. । √ग्रह् इत्यनेनापि भवितुं शक्नोति सम्बन्धः ।

हिन्दी०—√ग्रासना ( सक )=ग्रहणे, धारणे । "ग्रासत चित्त गयंद को" –रसनिधिः ।

| | | |
|---|---|---|
| २०३४+√ग्राम ( ग्राम ) १०/३३७ क्षी-श-च-काकृ-कात-हे-त्रो × | आमन्त्रणे ( प ) मै-सा-जै । | √श्राम १०/२२३ b आमन्त्रणे (प) काकृ । √श्राम १०/२०४ b आमन्त्रणे (प) कात । √श्राम १०/१७३ b आमन्त्रणे (प) शा । √श्राम १०/३२८ आमन्त्रणे (प) हे, वो । |

| | | |
|---|---|---|
| | | √ग्रस् (उणा. १,१४२) मन्; धातोराकारान्तादेशश्च । |

ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः—महाभार. विराट. ३२, ३ ।

**संस्कृत०**—ग्रामः–महाभार. १३,१७,११३ । ग्रामेषु नगरेषु च–मनु. १०,५४ । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका—मार्क. पु. ( श. क. द्रु. ) ।

| | | |
|---|---|---|
| २०३५+√घट् ( घट ) १०/१९१ च ×, श | हन्त्यर्थः (प) क्षी-जै-शा-हे । 'सङ्घाते' इति दुर्गः— क्षी । क्षी-मै-सा-काकृ-कात । सङ्घाते हिंसे द्युतौ च—वो । | √हन् (हन) २/ हिंसागत्योः ( प ) । क्ते-हत–>घत–,>√घट् । |

**संस्कृत०**–यन्त्रैरुद्घाटयामास–महाभार. ३,१७१५८; कथासरि. ४,८०; १५,४३ । घटा=समूहः–कथासरि. १९, ९ ।

**प्राकृत०**—√घड ( सक )=( १ ) योजने, ( २ ) निर्माणे, ( ३ ) सञ्चालने । भवि.–घडिस्सामि–स. ३६४ ।

**प्राकृत०**—√घडाव ( सक )=(१) निर्माणे, (नायं प्रयोजकः) । (२) निर्माणे (प्रयोज.) । घडावित्ता–आवम. ।

**हिन्दी०**—√घालना=नाशे, विक्रियायाम् । "चित्रकेतु कर घर इन घाला', —तुलसी. ।

| | | |
|---|---|---|
| २०३६+√घट् (घट) १०/२२९ क्षी-च-जै-शा ×, श | भाषार्थः ( प ) मै-सा-काकृ-कात । भासार्थः—हे । द्युतौ—वो । | √घण् ८/५३ घण्टानादे (उ) काकृ । √घण्ट् (घटि) १०/भासार्थः ( प ) । √घण्ट् १/११२ निर्नये ? ( प ) काकृ । |

| | | |
|---|---|---|
| २०३७+√घट्ट् (घट्ट) १०/९१ श× | चलने ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । चाले—वो । | √घट्ट् ( घट्ट ) १/ चलने ( आ ) । √घुट्ट् १/४३१ चलने ( आ ) काकृ । |

प्रयो. घर्षणादौ—ह्वि. ।

**संस्कृत०**—घट्टयति–महाभार. १२,१४१=चालयति ( नील. ); घट्टयन्तः–६, ६४,८५=स्पृशन्तः ( नील. ); घट्टयन्ती–४,२०,२८=कम्पयन्तो ( नील. )। विश्लिष्टं सन्धिं वैद्यो न घट्टयेत्–सुश्रु. २,२८,४; घट्टयन् विपचेत्–२,८८,१९।

**पालि०**—घट्टेति–मज्झिम. २,४; सुत्तनिपात ४८।

**प्राकृत०**—√घट्ट ( सक )=चालने–दस. ५,१,३०।

२०३९+√घण्ट् (घटि) १०/२३४ च×, श | भासार्थः ( प ) भाषार्थः—मै-सा-जै-काकृ-कात। द्युतौ—वो। | ध्वनिसादृश्यानि पूर्ववत्।

**संस्कृत०**—घण्टाम्–मार्क. पु. ८२,२१ ( घण्टयति=दीप्यते, पूजादिकाले वाद्येन शोभते, घण्टयति शब्दायते वा )।

**पालि०**—घण्टा–जातक ४,२१५।

२०३९+√घर् ( घर ) १०/१०९ मै-सा-श-च-जै-काकृ-कात-शा-हे-वो× | स्रावणे ( प ) इति दुर्गः–क्षी। क्षी। प्रयो. ह्वि.। | <√घृ स्रावणे ( प )। √घृ ३/ क्षरणदीप्त्योः (प)। √गल् ( गल ) १/ स्रवणेऽपि ( प )। √घरट्ट् १/११४ हिंसायाम् ( प ) काकृ।

**संस्कृत०**—आज्येनाभिघारितः–अ. वे. ५,२१,३।

२०४०√घुष् (घुषिर्) १०/१९४ श | विशब्दने ( प ) क्षी-मै-सा-च-कात-शा-हे। विशब्दे—जै-काकृ। 'अविशब्दने' इत्येके—क्षी। ह्लतौ विशब्दे—वो। | द्रष्ट.√घुष् (घुषिर्) १/६४४ शब्दार्थः।

√घुष् (घुष) ······ | 'विशब्दने' इति कौशिकः—क्षी। प्रयो. ह्वि.। विशब्दनम्=विशिष्टशब्दकरणम्—क्षी।

**संस्कृत०**—घोषयः–ऋ. ९,१०८,२। घोषयत्–जै. १,५९,६। घोषयन्–को. १,२८३। इति स द्रुपदो राजा स्वयंवरमघोषयत्–महाभार. १,६९५६।

**पालि०**—घोसेति–('घोस' इत्यस्य नामधातुः !) जातक २,११२; पेतवत्थु २,९।

२०४१√घृ १०/११ स्रावणे ( प ) <√घर् (घर) स्रावणे–द्रष्ट.।
च-काक्र-कात,×श क्षी-हे।
सम्प्रस्रवणे—मै सा।
सेचने—जै।
स्रवणे—शा।
'आवरणे' इति पूर्वे पेठुः—क्षी।
क्षी-हे।
सेके छादने—वो।
प्रयो. —ह्वि.।

**संस्कृत०**—अभिघारयति–तै. २,६,१,६; क. ४७,७; मै. ३,१०,२। व्याघारयति ( = बघारता है–हि. )–शब्रा. २,४,४,२४; काब्रा. १,३,४,१४।

**प्राकृत०**—√घार ( अक )=( १ ) विषप्रसरणे विषव्याप्त्या व्याकुलतायाम्, ( २ ) सक–विषेण व्याकुलीकरणे, ( ३ ) विषेण घातने। कर्म–घारिज्जंतो य तओ विसेण–स. १८९। हेक्र–घारिज्जिउँ–स. १८९।

२०४२+√चक्क् (चक्क) १०/५९ व्यथने ( प ) <√चिक्क् (चिक्क) व्यथने ( प )।
श (काक्र–√चक्) क्षी-मै-सा-च-जै-काक्र-कात-शा-हे।
√चक्क् १/४११b तृप्तौ प्रतिघाते च ( आ ) काक्र।
अर्तौ—वो

**संस्कृत०**—चक्क०–पञ्चविं. ब्रा. २५,१५ ( इन्दिशे स्तूदियन् १,३५। सेण्ट-पीटर्सबर्गसंस्कृतशब्दकोशे )।

२०४३+√चट् (चट) १०/१८९ भेदे ( प ) √चट् ( चटे ) १/ वर्षावरणयोः ( प ) सा।
च×,श क्षी-काक्र-कात-हे।
भेदने—मै-सा। √चट् १/१०९a प्रैष्ये माने च ( प )।
अन्ये तु आस्फुटौ= आस्फोटने चुरादिरिति व्याख्यन्— √कड् १०/३८c भेदे ( प ) काक्र।
क्षी-, शा ?
वधे भेदे च—वो।
१/……… गतौ—ह्वि.।

संस्कृत०—चट चट—वज्रपञ्जरो. ३१२,५। विचटत्—यशस्ति. च., १ आश्वा., १८ श्लो.। विचटन्ती=स्फुटन्ती। सहसोच्चचाट सैव देवी—भा. पु. ५,९,१८। उच्चाटयन्—भर्तृ. ३,९। योन्याश्चाटालत्वम्—चरक. शारीर. ४,१६—चाटालत्वम्=विवृतत्वम् ( आ. दी. )।

प्राकृत०—√चढ ( सक )=आरोहणे—सम्मत्त. १५९। ]

हिन्दी०—√चटकना ( <चटनम् )='चट' इति शब्दं कृत्वा स्फोटने भेदने।

हिन्दी०—√छँटना (<चटनम्=छेदने)-शकलीभूय पार्थक्ये, (२) विकिरणे, (३) साहचर्यत्यागे।

| | | |
|---|---|---|
| २०४४+√चण्ड् (चडि) १०/५० सा-श-च-जै काकृ-कात-शा-हे × | कोपे ( प ) क्षी-मै। रोषे—वो। | √चण्ड् ( चडि ) १/ कोपे ( आ )। √चण्ड् १/१७४ तैक्ष्ण्ये (प) काकृ। |
| २०४५√चप् ( चप ) १०/८८ श-च-जै-शा-हे × | कल्कने ( प ) इति चन्द्रः—क्षी। क्षी-मै-काकृ-कात। परिकल्कने—सा। कल्के—वो। | <√चह् (चह) कल्कने (प)। |
| २०४६+√चम्प् (चपि) १०/८२ क्षी,-श?,-च-जै-काकृ-कात-शा-हे-वो × | गत्याम् (प) मै-सा। | √छम्प् (छंप) १०/८२ गत्याम् (प)। √कम्प् (कपि) १/ चलने ( आ )। |

भारोपीय०—√जम्प् ( Jump )=उच्छलने, उत्कूर्दने ( संक्षिप्त आक्सफोर्ड-कोशेऽयं शब्दोऽनुकरणात्मको निर्णीतः )।

संस्कृत०—अद्यापि तां कनकचम्पकदामगौरीम्—चौरपञ्चा. १।

प्राकृत०—√चंप ( सक )=पीडने, अतिभारेण विनामने। चंपइ—आरा २५।

हिन्दी०—√चांपना=पीडने, अतिभारेण विनामने। चापशब्दादपि व्युत्पत्तिः, सा न मनोरमा।

हिन्दी०—√झाँपना=आच्छादने। √'झांपवुं' इति गौर्जरी भाषा।

| | | |
|---|---|---|
| २०४७+√चर् (चर) १०/२०५ च×,श | संशये ( प ) क्षी-मै-सा-जै-शा-हे। (सञ्चये—जै,मुद्रणदोषः) 'असंशये' इति दुर्गः—क्षी। क्षी-काकृ-कात-हे। संशीत्यसंशीत्योः—वो। | √चर् (चर) १/ गत्यर्थः, भक्षणेऽपि ( प )। √चल् (चल) १/ कम्पने (प)। √चल् (चल) १०/ भृतौ (प)। |

हिन्दी०--√चराना=प्रवञ्चने ।

२०४८+√चर्च् (चर्च) १०/१८० अध्ययने (प) √चर् (चर) १/ गत्यर्थः,
श क्षी-मै-सा-च-जै- भक्षणेऽपि (प)।
काकृ-कात-शा-हे-वो ।

प्रयो. —ह्वि. ।

संस्कृत०—चर्चयति–ऋ. प्राति. १५,१०,१२ (=अध्ययने) चर्चित०–देवीभा. ११,१८ (=लिप्त०)। अङ्गचर्चामरचयम्–कादम्ब. १५७ (मुम्बा. सं.)।

प्राकृत०—√चच्च (सक)=चन्दनादिविलेपने । चच्चेइ--धर्मवि. १५ ।

प्राकृत०—चप्प (सक)=(१) अध्ययने, (२) कथने, (३) भर्त्सनायाम्, (४) चन्दनादिविलेपने । चप्पइ–संक्षि. ३५ ।

हिन्दी०—√चरचना (<चर्चनम्)=चन्दनादिलेपने ।

हिन्दी०—√चरजना* (<चर्चनम्)=अनुमाने ।

२०४९+√चल् (चल) १०/७३ भृतौ (प) द्रष्ट.√चर् (चर) १०/
मै-श-च-जै-काकृ- क्षी-सा-हे-वो । संशये (प)।
कात-शा × √चल् (चल) ६/
विलसने (प)।

संस्कृत०—चालय–पै. ५,३४,७ । चालयेत्–काठ. २८,४ ।

२०५०+√चह् (चह) १०/८८ कल्कने (प) मित् √चह् (चह) १/ कल्कने (प)।
मै-(श)-च-जै-काकृ- क्षी । √चह (चह) १०/कल्कने (प)।
कात-शा-हे × परिकल्कने—सा ।
शाठ्ये—वो ।

२०५२+√चह् (चह) १०/३१३ कल्कने (प) √चह् (चह) १/ कल्कने (प)।
श-च × क्षी-हे । √चह् (चह) १०/ कल्कने (प)।
परिकल्कने—मै-सा-
जै-काकृ-कात-शा ।
शाठ्ये—वो ।

कल्कनम्=दम्भः–क्षी ।

२०५२+√चि (चिञ्) १०/९० चये (उ) मित् √चि (चिञ्) ५/ चयने (उ)।
मे-श-च-जे-काकृ- —क्षी ।
कात-शा × चित्याम्—वो ।
(हे ५/५ इत्यत्र स्मरति) चयने—सा-हे ।

ञित्त्वमनित्यण्यन्तत्वे लिङ्गम्—क्षी ।

संस्कृत०—चयते–ऋ. १,१६७,८; ऐआ. २,७ [चयने, हिंसायाम् इति विवेकः।]

२०५३+√चिक्क् (चिक्क) १०/६० व्यथने (प) <√चक्क् (चक्क) व्यथने (प)।
मै-श-च-जै-काकृ- इति कौशिकः—
कात-शा × क्षी-सा-हे।
अर्तौ—वो।

हिन्दी०—चिक्का=प्रस्तरशकलम्। तद् भवति व्यथनाय।

२०५४+√चित् (चित) १०/१४३ संज्ञाने (आ) √चित् (चिती) १/ संज्ञाने
श×,च क्षी-मै-सा-काकृ। (प)।
संवित्तौ—जै। √चिन्त् (चिति) १०/ स्मृत्याम्
संवेदने—कात-शा-हे। (प)।
ज्ञाने—वो।
प्रयो. —ह्वि.।

संस्कृत०—चेतयते–शब्रा. ८,५,४,३; तैब्रा. २,१,२,३; छान्दोग्यो. ७,५,१।

प्राकृत०—√चेअ (सक)=(१) चेतनायाम्, (२) स्मृतौ–चेयइ–स. ५३८, (३) ज्ञाने, (४) अनुभवे—चेयए–आवम.; (५) दाने, (६) निर्माणे। चेएइ–आचा.; सम. ५१,।

हिन्दी०—√चेतना=ज्ञाने, विचारणे। √चिन्त् १०/२ इत्यस्मादस्य व्युत्पत्ति-कल्पना न युक्ता।

२०५५+√चित्र (चित्र) १०/३६० चैत्रस्य करणे (प) √चि (चिञ्) ५/चयने (उ)।
श-च × (जै-शा) क्षी। चित्रं चायनीयं मंहनीयं
चित्रीकरणे कदाचिद् धनम्–निरु. १२,६,१।
दर्शने च—मै।
चित्रकरणे—सा।
विचित्रदर्शनयोः—काकृ।
विचित्रीकरणे कदाचिद्
दर्शने—कात।
(जै-शा—√चित्र्).... चित्रकरणे कदाचिद् दर्शने
च—जै-शा।
वैचित्र्यकरणार्थः—हे।
चित्रस्य=आलेख्यस्य करणे—क्षी।
चित्रकरणे=आलेख्यकरणे—सा।

२०५६√चित्र (चित्र) १०/३६१ कदाचिद् दर्शने (प) क्षी।
अद्भुतदर्शने क्षी-सा।
क्षणिकेक्षणे लेख्ये —वो।

**भारोपीय०**—*(स्) काइ (-त्-,-द्)=दीप्तम्, स्पष्टम्।

**भारेनीय०**—अवे. चिथ्र=स्पष्टम्, दीप्तम्-वा. पॉकर्नी:।

**प्राकृत०**—√चित्त (सक)=चित्रणे। चित्तेइ—महा.।

**हिन्दी०**—{√चितरना* (<चित्रणम्)=चित्रणे।
√चीतना (<चित्रणम्)=चित्रणे।

२०५७√चिन्त् (चिति) १०/२ श — स्मृत्याम् (प) क्षी-मै-सा-च-काकृ-कात-शा-हे। स्मरणे—जै। स्मृतौ—वो। प्रयोज. —ह्वि.। — √चित् (चित) १०/ संज्ञाने (आ)।

**भारोपीय०**—√*कुआइ=परीक्षणे। √*कुआइत् (च्वाइत्)-:-वा. पॉकर्नी:।

**संस्कृत०**—चिन्तयति-मैत्र्यु. ४,४; गर्भो. ३। चिन्तयेत्-गोब्रा. १,१,३०; मनु. ७,५६=निरूपयेत् (मन्वर्थ.)। चिन्ताम्-गोब्रा. १,१,१६।

**पालि०**—चिन्तेन्तो; चिन्तयन्तो-सुत्तनिपात ८६४।

**प्राकृत०**—√चित=(१) चिन्तने, विचारणे, (२) स्मृतौ, (३) ध्याने, (४) चिन्तायाम्, पश्चात्तापे। चितेइ-उव.; कुमा.।

**हिन्दी०**—√चितना*=(१) चिन्तने, ध्याने, स्मरणे, (२) विचारणे, मनने।

२०५८+√चीक् (चीक) १०/२७० क्षी-श-च × — च=आमर्षणे (प) आधृषाद् वा। मै-सा-जै-काकृ-कात-शा-हे। मर्षणे—वो। — √शीक् (शीक) १०/ आमर्षणे (प) आधृषाद् वा।

२०५९+√चीव् (चीव) १०/२४३ च ×, श — भाषार्थः (प) क्षी-शा-हे। भाषार्थः—मै-सा-जै-काकृ-कात। दीप्तौ—वो। — √चीव् (चीव) १/ आदानसंवरणयोः (उ)।

| | | |
|---|---|---|
| २०६०√चुक्क् ( चुक्क ) १०/६० <br> श ( काकृ–√चुष्क् ) | व्यथने ( प ) <br> क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । <br> अर्तौ—वो । | <√चिक्क् ( चिक्क ) व्यथने ( प ) इति च कौशिकः —क्षी । <br> √चक्क् (चक्क) व्यथने (प) । |
| २०६१+√चुट् ( चुट ) १०/७७ | छेदने ( प ) इति चन्द्रः—क्षी । | <√छुट् ( छुट ) छेदने (प) । |
| २०६२√चुट् ( चुट ) १०/११९ <br> श | छेदने ( प ) <br> क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । <br> छेदे—वो । | <√चुण्ट् (चुटि) छेदने (प) । |

संस्कृत०—( उच्चोटनम्–क्षी ) ।

बुन्देली०—√चुटयावौ=आच्छेदने ।

बुन्देली०—[ चोंटिया ( <छोटिका ) ] ।

| | | |
|---|---|---|
| २०६३+√चुट्ट् ( चुट्ट ) १०/२४ <br> श-च×(कात–√छुट्ट्) | अल्पीभावे ( प ) <br> क्षी-मै-सा-जै-काकृ-शा-हे । <br> तुच्छने—वो । | >√पुट्ट् ( पुट्ट ) अल्पीभावे ( प ) इत्येके—क्षी । <br> √चुट् ( चुट ) १०/ छेदने ( प ) । <br> √चुण्ट् (चुटि) १०/ छेदने ( प ) । <br> √चुण्ड् (चुडि) १०/ छेदने ( प ) । |
| २०६४+√चुण्ट् (चुटि) १०/११९ <br> च-कात × ,श | छेदने ( प ) इति नन्दी—क्षी । <br> क्षी-मै-सा-जै-काकृ-शा-हे । <br> छेदे—वो । | ध्वनिसादृश्यानि पूर्ववत् । |

बुन्देली०—√चोंटबौ=छेदने ।

| | | |
|---|---|---|
| २०६५+√चुण्ड् (चुडि) १०/११९ <br> सा-श-च-जै-काकृ-शा× | छेदने ( प ) इति दुर्गः—क्षी । <br> क्षी-मै-कात-हे वो । <br> छिदि—वो । | <√चुट् (चुट) छेदने (प) <br> √चुण् (चुण) ६/९१ a छेदने ( प ) काकृ, कात-हे । <br> शेषः पूर्ववत् । |

२०६६+√चुद् ( चुद ) १०/५६ श | संचोदने ( प ) क्षी-मै-सा-च-जै-काकृ-शा-हे। संनोदने—कात। | √चुड्ड् ( चुड्ड ) १/ हावकरणे ( प )। √चुन्द् १/६०० निशाने ( उ ) च।

१/ प्रयो. —ह्वि.।

सञ्चोदनम्= प्रेरणम्—क्षी।

भारोपीय०—√* ( स् ) कॉइद् [ चॉइद् ]=प्रेरणे; क्षेपणे।

भारेनीय०—न. पर्सि. चुस्त् =स्फूर्तियुक्तम्, तीव्रम्, व्यस्तम्–जू. पॉकर्नी:।

संस्कृत०—चोदते–ऋ. ९,६९,२; कौ. २,७२१; जै. ३,५९,१३। चोदत्–तैब्रा. २,८,५,८। चोदयामि–शौ. ३,१५,१। चोदयामास–रघु. ४,२४=प्रेरयामास (संजी.)।

पालि०—अचोदयि–जातक ५,११२।

प्राकृत०—{ √चोअ (सक)=(१) प्रेरणे, (२) कथने। चोएइ–उव.; स. १५। √चोए (सक)=( १ ) प्रश्ने, ( २ ) शिक्षणे ( प्रयो. )। चोएइ; चोएह–वव. १।

हिन्दी०—√चोदना ( सक )=यभने।

२०६७+√चुम्ब् (चुबि) १०/९४ | हिंसायाम् ( प ) क्षी-श-च-जै-काकृ-कात- मै-सा। शा-हे-वो × | >√चुम्भ् ( चुभि ) हिंसायाम् (प) इत्येके–मै। √चुब् १/२०६ n मर्दने ( प ) काकृ। √चुम्ब् १/२०६ m मर्दने ( प ) काकृ। √चुण्ड् १/१८३ g हिंसायाम् (प) काकृ।

२०६८√चुम्भ् ( चुभि ) १०/९४ | हिंसायाम् ( प ) क्षी-सा-श-च-जै-काकृ-कात-शा-हे-वो × इत्येके—मै मै। | <√चुम्ब् ( चुबि ) हिंसायाम् ( प )। शेषः पूर्ववत्

हिन्दी०—√चुभोना=छेदने।

हिन्दी०—[ √चूंथना=विदारणे। ]

२०६९+√चुर् ( चुर ) १०/१ श — स्तेये ( प ) क्षी-मै-सा-च-जै-काक्‌-कात-शा-हे-वो । — उत्तरधातुर्द्रष्टव्यः ।

यौगिको धातुः — —ह्वि. ।

**संस्कृत०**—चोरभयम्–खि. ७,७,१० । यश्चाग्निं चोरयेद् गृहात्–मनु. ८,३३३ । अचूचुरच्चन्द्रमसोऽभिरामताम्–शिशु. १,१६ ।

२०७०+√चुल् ( चुल ) १०/६८ क्षी-जै-काक्‌-कात-शा-हे-वो ×, श — समुच्छ्राये (प) मै । मै-सा । निमज्जने—च । — √पुल् (पुल) १/ महत्त्वे (प) । √पुण् (पुण) ६/ कर्मणि शब्दे च ( प ) । √चुल् ( चुल ) १/२४३ a द्रावकरणे पाकाग्निकुण्डे च ( प ) काक्‌ । अग्निना चोपचूलनम्–मनु. ११,१९९ [१० प्रक्षिप्तश्लो.] √चुल्ल् ( चुल्ल ) १/ हावकरणे ( प ) ।

**संस्कृत०**—चोलकम्–यशस्तिल. च., ३ आ., ४३९ पृ.=परिधानधौतवस्त्रम् । ममौ स भद्रं चुलुके समुद्रः–नैष. ८,४५ ।

२०७१√चुलुम्प् (चुलुम्प) १०/३८५ मै-श-च-जै-काक्‌-कात-शा-हे × — लोपे ( प ) ( क्षी-सा )-वो । — √लुप् (लुप्लृ) ६/छेदने (उ) ।

नो गणनिर्देशः— शोषणे—ह्वि. ।

ह्विट्नीः सेण्टपीटसबर्गसंस्कृतशब्दकोशोद्धृतं महावीरचरितप्रयोगं प्रमाणत्वे-नोपन्यस्यति । एकलमेवोदाहरणं च प्रमाणयति । मया यशस्तिलकचम्प्वामन्यदप्यु-दाहरणमधिगतम्—उच्चुलुम्पन०–यशस्ति. च., १ आश्वा., ६८ पृ. = उच्चुण्टन० । उच्चुलुम्पन्त्यपो ये–महावीर. ५,८ ।

२०७२+√चूण् (चूण) १०/१०१ मै-सा-च-जै-शा ×, श (काक्‌—√चुण्) लैपिकी त्रुटिः । — संकोचने ( प ) क्षी-कात-हे । संकोचे—काक्‌-वो । — >√चूर्ण् (चूर्ण) संकोचने ( प ) । √तूण् (तूण) संकोचने इति चन्द्रः–क्षी ।

| | | |
|---|---|---|
| व्याख्यायाम्—चूणय-तीति । | | √कूण् (कूण) १०/ संकोचने (आ)। |
| २०७३+√चूर्ण (चूर्ण) १०/१९ श-च × | प्रेरणे (प) क्षी-मै-सा-जै-काक्र-कात-शा-हे । 'पेषणे' इति चन्द्रः—क्षी । पेषे—वो । प्रेरणम्=दलनम्—क्षी । | √चूर् (चूरी) ४/ दाहे (आ)। |

संस्कृत०—चूर्णयित्वा—बृहज्जाबालो. ३,२८ ।

पालि०—चुण्णयति=चूर्णने–विनय. २, १०७; जातक ४,४५७ ।

प्राकृत०—√चूर=दलने । चूरंमि–धम्म. ९ टी. ।

हिन्दी०—√चूरना † * (<चूर्णनम्)=पेषणे, दलने, (२) त्रोटने ।

| | | |
|---|---|---|
| २०७४+√चूर्ण् (चूर्ण) १०/१०१ श-च-काक्र-कात-हे-वो × | संकोचने (प) इत्येके—क्षी । क्षी-मै-सा-जै-शा । | <√चूण् (चूण) संकोचने (प)। |
| २०७५+√चृत् (चृत) १०/२६९ मै-सा-श-च-जै-काक्र-कात-शा × (सा–√चृप् [चृप]) (सा–√छृप् [छृप]) | संदीपने (प) इत्येके–क्षी । क्षी-हे-वो । सा । सा । | <√तृप् (तृप) संदीपने (प) आधृषाद्वा । √छृद् (छृद) संदीपने (प) इत्येके–क्षी । √चृत् (चृती) ६/ हिंसा-ग्रन्थनयोः (प)। |
| २०७६+√चृप् (चृप) १०/२७९ कात-शा-हे-वो × कात-शा-हे-वो × | संदीपने (प) इति क्षीरस्वामी—सा । सा । | <√छृद् (छृदी) संदीपने (प)। √छृप् (छृप) संदीपने (प) सा । √तृप् (तृप) संदीपने (प) सा । |

| | | |
|---|---|---|
| २०७७+√च्यु १०/२०६ श-च × (काकृ-√च्यव्) | सहने (प) क्षी-सा-जै-शा-हे। हसने—क्षी-मै-सा-काकृ-कात हे। हसे सहने—वो। | √च्यु (च्युङ्) १/ गतौ (आ)। |

**संस्कृत०**—च्यावयति-अ. वे. १०,१,१३।

| | | |
|---|---|---|
| २०७८+√च्युस् (च्युस) १०/२०६ मै-श-च-जै-काकृ-कात-शा-हे × | सहने (प) इत्येके—क्षी क्षी-सा। 'हसने' च इत्येके—क्षी-सा। हानौ—वो। | <√च्यु सहने (प)। |

| | | |
|---|---|---|
| २०७९√छद् (छद) १०/४१ मै-श-च-वो × | संवरणे (प) क्षी-सा-जै-काकृ-कात-शा-हे। | √छन्द् (छदि) १/ संवरणे (प) मै। |

प्रयोज. —ह्वि.।

**संस्कृत०**—मर्माणि ते वर्मणा छादयामि–ऋ. ६,७५,१८। अग्निमन्तश्छादयसि–अ. वे. ९,३,१४।

**पालि०**—छादेति–विनय. २,१११।

**प्राकृत०**—छाजन (<छादनम्)=वस्त्रम्। "छाजन भोजन प्रीति सों दीजै साधु बुलाय"–कबीरदासः।

| | | |
|---|---|---|
| २०८०√छद् (छद) १०/२७२ श × | संवरणे (प) आधृषाद्वा क्षी। अपवारणे—मै-सा (उ),-च-जै-काकृ-कात-शा-हे। संवृतौ (उ)—वो। | |

१/ प्रयो.—ह्वि.।

**भारोपीय०**—√* स्कॅद्=आच्छादने। पु. उ. ज. हाज्; म. उ. ज. हुऐंजे=कूटम् (=coat); चण्डातकम्।

**भारेनीय०**—अवे. सादयन्ती=कूटम्, चण्डातकम्–जू. पॉकर्नीः।

**संस्कृत०**—छदति, ते–ह्वि.। मया नोपलब्धम्। छादयति–शब्रा. ३,५,१,३६। आच्छत्–मा. १५,४; का० १६,१,४।

**अपभ्रंश०**—छाय (सक)=आच्छादने। वक्र–छायंत–पउम. ७,१४।

२०८१+√छद् ( छद ) १०/३८१ अपवारणे ( प ) | √छद् ( छदिर् ) १/ ऊर्जने ( प ) मित् । शेषः पूर्ववत् ।
मै-श-च-जै-काकृ- क्षी-सा ।
कात-शा × संवरणे—हे ।
संवृतौ—वो ।
प्रयोज. संवृतौ, प्रसादे—ह्वि. ।

**संस्कृत०**—एतद् देवेभ्यश्छदयति यत् कृष्णाजिनम्–ऐब्रा. १,३०; छान्दोग्यो. १,४,२ ।

२०८२+√छन्द् ( छदि ) १०/४३ संवरणे ( प ) | छन्दति–निघ. ३,१४= अर्चतिकर्मा ।
क्षी-जै-काकृ-कात-शा- मै-सा-च ।
हे-वो × ,श
१/ प्रयोज. प्रतीतौ, प्रसादे–ह्वि. ।

**संस्कृत०**—छन्दयति–शांआ. ११,३; दैब्रा. ३,१९ । ( छन्त्सि–ऋ. १,१६३,४; तै. ४,६,७,२ । छन्दति–ऐआ. १,१,३ ) तस्मादुपच्छन्दयति–रघु ५,५८=प्रार्थयमाने ( संजी. ) ।

**प्राकृत०**—√छंद (सक)=(१) वाञ्छायाम्, (२) अनुज्ञायाम्, (३) निमन्त्रणे । कवकृ–छंदिज्जंताविउव. । संकृ–छदिअ–दस. १० ।

**हिन्दी०**—√छाँदना=रज्ज्वादिना दृढं बन्धने ।

२०८३+√छम्प् ( छपि ) १०/८२ गत्याम् ( प ) | √क्षम्प् ( क्षपि ) १०/ क्षान्त्याम् ( प ) । √चम्प् (चपि) १०/ गत्याम् ( प ) मै । √छम्ब् ( छबि ) १०/८० गत्याम् ( प ) जै ।
मै-सा-श-च-जे × क्षी-शा ।
गतौ—काकृ-कात-हे ।
सर्पे—वो ।

**प्राकृत०**—जंपाण, न. = ( १ ) वाहनविशेषः, सुखासनम् शिविकाविशेषः ( ठा. ४,३; ओप; सुपा ३९३; उप ९५६ ); ( २ ) शवयानम्—सुपा. २१९ ।

**हिन्दी०**—√झाँपना ( <छम्पनम् )=(१) आच्छादने, निलयने, (२) उत्कूर्दने, (३) आक्रमणे, (४) लज्जायाम् । 'झाँपवुं'–इति गुर्जरभाषा ।

**हिन्दी०**—√झूमना=इतस्ततो दोलने ।

२०८४+√छर्द् ( छर्द ) १०/५३ वमने ( प ) | √छृद् ( उच्छृदिर् ) ७ दीप्तिदेवनयोः ( उ ) । √छृद् १०/२४१ वमने ( प ) शा; ३९८ हे,-वो ।
च × ,श क्षी-मै-सा-जै-काकृ-
कात-शा-हे-वो ।
प्रयोज. —ह्वि. ।

**भारोपीय०**—√*स्केर=प्रलापे, विष्ठा, कुज्झटिका, असारपदार्थः। म. आइरि. श्वेर्इदम्=निष्ठीवने, वमने। पु०. वुल्गा. स्करेन्द=घृणितम्, पूतिगन्धि–त्रा. पॉकर्नीः।

**संस्कृत०**—छर्दयन्ति–शब्रा. १२,४,२,९। यः सोमं पीत्वा छर्दयेत्–लाट्या. ८,१०,९। छर्दयन्ति च मानवाः–महाभार. ५,९६,४२।

**प्राकृत०**—√छड्ड (सक)=(१) वमने, (२) त्यागे, (३) पातने। छड्डइ–महा.; उवा.।

**हिन्दी०**—√छाँड़ना*†=त्यागे।

**हिन्दी०**—{√छाडना, √छाड़ना†} = वमने।

| | | |
|---|---|---|
| २०८५+√छल (छल) १०/ अपाणिनीयः | प्रवञ्चने ( उ ) ? | |

**संस्कृत०**—छलितुम्–वा. रा. ६,८६,१३। छलयिष्यति–महाभार. ३,१५५६०। द्यूतं छलयतामस्मि–गी. १०,३६। शैवाललोलान् छलयन्ति मीनान्–रघु. १६,६१ = प्रादुर्भावयन्ति (संजी.)।

**प्राकृत०**—√छल (सक)=प्रवञ्चने। छलिज्जेज्जा–स. २१३।

**हिन्दी०**—√छलना=प्रतारणे।

| | | |
|---|---|---|
| २०८६+√छिद्र (छिद्र) १०/३६८ च ×, श (जै-शा–√छिद्र्) | भेदे ( प ) क्षी-कात-शा-हे-वो। भेदने—मै सा। 'करणभेदे' इति गुप्तः—क्षी,-सा। कर्णभेदने—सा। कर्णभेदे—जै-काकृ। | √छिद् ( छिदिर् ) ७/ द्वैधीकरणे ( उ )। √छेद ( छेद ) १०/ द्वैधीकरणे ( उ )। √छिद्+"स्फायि०" उणा. २,१३ रक्। |
| २०८७√छुट् ( छुट ) १०/७७ मै-सा-श-च × प्रयो. | छेदने ( प ) क्षी-जै-काकृ-कात-शा-हे। छेदे—वो। —ह्वि.। | √छुट् (छुट) ६/छेदने (प)। |

**संस्कृत०**—छोटिकाभिर्दशदिग्बन्धनं कृत्वा–तन्त्रसारः। छोटिका = तर्जन्यङ्गुष्ठाङ्गुलिध्वनिः।

**प्राकृत०**—√छोड (सक)=बन्धनमुक्तौ। छोडइ, छोडेइ–भवि.; महा.।

**हिन्दी०**—चुटकी, चिकोटी।

**बुन्देली०**—चोंटिया ( <सं. छोटिका ) = अङ्गुलिद्वयनखसहकारेण कलेवरचर्मण ईषद्विदारणम्।

| | | |
|---|---|---|
| २०८८+√छृद् (छृद) १०/२६९<br>मै-श-च-काकृ-कात× | संदीपने ( प ) इत्येके<br>—क्षी । आधृषाद्वा ।<br>क्षी-सा-जै-शा-हे ।<br>संदीपे—वो । | < √चृत् (चृत) संदीपने ( प )।<br>< √तृप् ( तृप ) संदीपने ( प )। |
| २०८९√छृद् (छृदी) १०/२६२<br>क्षी-च-जै-शा-वो × | संदीपने (प)–मै,-<br>सा-कात-हे ।<br>संदीपे—काकृ । | |
| २०९०+√छृप् (छृप) १०/२७९<br>क्षी-मै-श-च-जै-काकृ-<br>कात-शा-हे-वो × | संदीपने ( प ) क्षीर-<br>स्वामिनस्तु—सा । | < √छृद् (छृदी) संदीपने ( प ) सा ।<br>< √चृप् ( चृप ) संदीपने ( प ) सा । |
| २०९१+√छेद (छेद) १०/३८०<br>च ×, (श–च्छिदिर्)<br><br><br>प्रयोज. | द्वैधीकरणे ( प )<br>क्षी-मै-सा-जै-काकृ-<br>कात-शा-हे ।<br>छेदे—वो ।<br>—ह्वि. । | √छिद् (छिदिर्) ७/ द्वैधी-करणे ( उ )। |

**संस्कृत०**—छेदयति–शाङ्खा. श्रौ. १७,१,८; गोगृ. ४,२,९ । द्वावोष्ठौ छेदयेन्नृपः –मनु. ८,२८२; छेदयेल्लवशः क्षुरैः–८,२९२ ।

**प्राकृत०**—√छेअ (सक)=छेदने ( अप्रयोज. ), (२) छेदने ( प्रयोज. ) । कर्म– छेइज्जंति–पि. ५४३ ।

**हिन्दी०**—√छेड़ना=( १ ) स्पर्शे, ( २ ) विलेखने, खनने ।

| | | |
|---|---|---|
| २०९२+√जंस् (जसि) १०/१२८<br>च ×, श | रक्षणे ( प )<br>क्षी-मै-सा-व-जै-काकृ-<br>कात-शा-हे-वो ।<br>रक्षे—वो । | |
| २०९३+√जभ् (जभ) १०/१८४<br>मै-श-च-जै-काकृ-<br>कात-शा-वो ×<br>प्रयो. | नाशने ( प ) इति<br>चन्द्रः—क्षी ।<br>क्षी-सा-हे ।<br>—ह्वि. । | > √जम्भ् ( जभि ) नाशने ( प )। |

**संस्कृत०**—हनू वृकस्य जम्भय–अ. वे. १९,४७,९ । अजीजभम्–शो. ७,५६,५ ।

२०९४+√जम्भ् (जभि) १०/१८४ नाशने (प)
च × श, श
क्षी-मै-सा-जै-कात-शा-हे ।
नाशे—काकृ ।
नशि—वो ।
प्रयो. —ह्वि. ।
>√जभ् (जभ) नाशने (प) ।

**संस्कृत०**—जम्भयन्तः—ऋ. ७, ३८, ७; मा. ९, १६; तै. १, ७, ८, २; शब्रा. ५,१,५,२२। जम्भयन्ति—पैं. १७,१२,५ ?

२०९५+√जल् (जल) १०/१० अपवारणे (प)
च × , श
क्षी-मै-सा-जै-काकृ-कात-शा हे ।
पिधाने—वा ।
>√लज् (लज) अपवारणे (प) इति नन्दी—क्षी ।
√जल् (जल)१/ घात्ये (प) ।
जलम्, जलाषम्—निघ. १,१२=उदकनामनी ।
जालं जलचरं भवति जलेभवं वा जलेशयं वा—निरु. ६,२७,१ ।

**संस्कृत०**—जालान्तरप्रेषितदृष्टिरन्या—रघु. ७, ९ ।

२०९६√जस् (जसु) १०/१३१ हिंसायाम् (प)
च × , श
क्षी-मै-सा-जै-काकृ-कात-शा-हे ।
वधेऽनादरे—वो ।
हिंसार्थः—हे ।
प्रयो. ह्वि. ।
√जस् (जसु) ४/ मोक्षणे (प) ।
√जह् १/३१६ m हिंसागत्योः (प) काकृ ।
जसति—निघ. २, १४= गतिकर्मा ।

**संस्कृत०**—जासयति --शब्रा. २, २, २, १९ । अजीजसः—पै. ४, १६, ७ । निजौजसोज्जासयितुं जगद्द्रुहाम्—शिशु. १,३७ ।

२०९७+√जस् (जस) १०/१८६ ताडने (प)
मै-सा-च × , श
क्षी-जै-काकृ-कात-शा-हे ।
वधेऽनादरे—वो ।
√जस् (जसु) १०/ हिंसायाम् (प) ।
शेषः पूर्ववत् ।

२०९८+√जस् (जसु) १०/१७७ ताडने (प) मै,-सा ।
क्षी-श-च-जै-काकृ-कात-शा-हे-वो ×
प्रयो. —ह्वि. ।

संस्कृत०—जजस्तम्—ऋ. ४,५० [ ११; ७, ९७, ९ ] शेषः पूर्ववत् ।

| | | |
|---|---|---|
| २०९९+√जुञ्च् (जुचि) १०/२५८ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो × | भाषार्थः ( प ) स्वामि-काश्यपमतानुसारेण—सा । | √तुञ्ज् (तुजि) १०/२२ भाषार्थः ( प ) सा । |
| २१००+√जुड् (जुड) १०/१०६ श | प्रेरणे क्षी-मै-सा-च-जै-कात-शा-हे । नोदे—वो । व्यभिचारे—काकृ । | √जुड् ( जुड ) ६/ बन्धे ( प ) । √जुड् (जुड) ६/ गतौ (प) इति दुर्गः–क्षी । |
| २१०१+√जुष् (जुष) १०/२८१ श-च × | परितर्पणे ( प ) क्षी-मै-जै । परितर्कणे—सा-कात-शा-हे । परितर्के—काकृ । तर्कतृप्त्योः—वो । | √जुष् (जुषी) ६/ प्रीति-सेवनयोः ( आ ) । √जुष् १/२९३ हिंसायाम् ( प ) काकृ । |
| प्रयोज. | —ह्वि. । | |

संस्कृत०—जोषयेत् सर्वकर्माणि—गी. ३,२६ ।

हिन्दी०—√जोखना ( <जोषणम्=परितर्कणे )=तोलने, माने ।

हिन्दी०—{ जोष / जोख्* } "तुलसी प्रेमपयोधि की तातें माप न जोष" —तुलसीदासः ।

हिन्दी०—आयव्ययविवरणम्, लेखविवरणम् ( परितर्कणम् ) ।

| | | |
|---|---|---|
| २१०२√जॄ १०/२६५ च ×, श | वयोहानौ ( प ) आधृषाद्वा । क्षी-मै-सा-जै-काकृ-कात-शा-हे । ज्याने—वो । | >√ज्रि वयोहानौ ( प ) इति नन्दी–क्षी । |

भारोपीय०—√*गॆर्–, √*गॆर्–, √*ग्रॆ = वयोवृद्धौ, जरायाम्, परिपक्वतायाम् । पु. च. स्ला.–जरॆति=परिपक्वतायाम्–जू. पॉकर्नीः ।

संस्कृत०—जारयन्ती–ऋ. १,१२४,१० । जरति–षोढो. १७ । न यं जरन्ति शरदो न मासाः–ऋ. ६,२४,७ । अजीजरत्–नै. ११,२,१ ।

**पालि०**—जरयति ( प्रयोज. )–जातक ५,५०१=६,३७५ ।

**पालि०**–-जीरति, जीरयति ( प्रयो. )–विनय. १,२३७=नाशे ।

**प्राकृत०**—√जर=जरायाम् । वक्क–जरंत–अच्चु. ७९ ।

**प्राकृत०**—√जीरव ( सक )=जीर्णतायाम् । जीरवइ–कुप्र. २६६ ।

**हिन्दी०**—√झड़ना, √झरना ( <जरणम्, क्षरणम् ? )=कस्यचन वस्तुनो लघीयशामंशानां विशीर्य पतने केशानां विशरणे

| | | |
|---|---|---|
| २१०३+√ज्ञप् (ज्ञप) १०/८६ जै-शा-हे ×, श ( च—√ज्ञा ) | मारणतोषणनिशानेषु ( प ) मिच्च । | √ज्ञा १/मारणतोषनिशानेषु ( प )। |
| | क्षी-च । | |
| | ज्ञापने मारणादिषु चाभिधानमस्यैव —मै । | |
| | मारणदिषु चाभिधानमस्यैव—सायणः ( स्मरति )। | |
| | मारणतोषणनिशामनेषु —शाकटायनानुसारिणः— | |
| | ज्ञेये—काक्र । | |
| | ज्ञप्तौ—वो । | |
| | कात ? | |
| प्रयो. | ह्वि. । | |

**संस्कृत०**—ज्ञपयिष्यामि–कौ. १,१ । ज्ञपयते–छान्दोग्यो. २,१३,१ । ज्ञपय राजपुत्र–शाङ्खा. श्रौ. १५,२५,२ । ज्ञापयते स प्रस्तावः–छान्दोग्यो. २,१३,१ ।

| | | |
|---|---|---|
| २१०४+√ज्ञा १०/२०० श | नियोजने ( प ) | √ज्ञा ९/ अवबोधने ( उ )। |
| | क्षी-मै-काक्र-कात-शा-हे । | |
| | नियोगे—सा-जै । | |
| | तोषणे—च । | |
| | प्रेरणे—वो । | |
| | मारणादि ( =मारणतोषणनिशान )–नियोजनेषु—हे । | |
| प्रयो. | ह्वि. । | |

**भारोपीय०**—√*गेन्–, √*गेन्–, √*ग्ने–, √*ग्नो=ज्ञाने, परिचये, विचारणे–वा. वॉकर्नीः ।

**संस्कृत०**—अज्ञापयत्–जैत्रा. १८६। भक्ष्यतामिति सुव्यक्तं प्रभुराज्ञापयिष्यति–वा. रा. ५,२५,४८। परीक्ष्य ज्ञापयन्नर्थान्–महाभार. १२,४१४९।

**प्राकृत०**—√जाणाव=ज्ञापने। जाणावइ, जाणावेइ–कुमा.; महा.।

| | | |
|---|---|---|
| २१०५√ज्रि १०/२६५ मै-श-च-जै-काक्ठ-कात-शा-वो × | वयोहानौ (प) इति नन्दी—क्षी। आधृषाद्वा। क्षी-सा-हे। | <√जॄ वयोहानौ (प)। √जॄ (जॄष्) ४/ वयोहानौ (प)। |

| | | |
|---|---|---|
| २१०६+√टङ्क् (टकि) १०/९८ च ×, श | बन्धने (प) क्षो-मै-सा-जै-काक्ठ-कात-शा-हे। बन्धे—वो। प्रयो. आवरणे—ह्वि.। | <तङ्क (पृषोदरादित्वा-ट्टङ्क इति। द्र. अमर-टीकायां रमानाथः) √टम्ब् १/२०६ z मर्दने (प) काक्ठ। |

एवमन्यत्रापीदित्त्वं णिज्विकल्पार्थं द्रष्टव्यम्–१०/२ सा।

**संस्कृत०**—टङ्क टङ्क–लाङ्गूलो. २१४:१७। जलवतोत्तानेन पात्रेण देहस्थालीं टङ्कयति–का. श्रौ. ४,२,३४। टङ्कैश्च दात्रैः–वा. रा. २,८०,७=पाषाणदारणैः। (खनित्रम्–मेदि. के २४।)

**हिन्दी०**—√टाँकना=बन्धने, योजने।

**हिन्दी०**—टाँका (<टङ्कः)=योगः, बन्धनम्।

**हिन्दी०**—टाँग (<टङ्का=जङ्घा–मेदि., के २५)=आजघनाद् गुल्फपर्यन्तो भागः।

**बुन्देली०**—टाँक (<टङ्का=जङ्घा -मेदि., के २५)=जघनाग्रभागः।

| | | |
|---|---|---|
| २१०७+√टिप् (टिप) १०/१३९ मै-सा-श-च-जै-काक्ठ-कात-शा-हे × | क्षेपे (प) क्षी। नुदि—वो। | √तिप् (तिप) १०/ क्षेपे (प)। √स्तिप् (स्तिप) १०/ क्षेपे (प)। √डिप् (डिप) १०/क्षेपे (प)। √तिप् (तिपृ) १/ क्षरणार्थः (आ)। |

**प्राकृत०**—टिप्पी=टीका, तिलकम्–दे. ४,३। टिप्पणय=विवरणम्–सुपा. ३२४।

**हिन्दी०**—√टीपना (<टेपनम्=क्षेपे)=मन्दप्रहारे; (२) हस्तेनाङ्गुल्या वा विनामने, (३) अङ्कने, टङ्कने।

**हिन्दी०**—{√टिपकना; √टपकना}=बिन्दुक्षेपे।

| | | |
|---|---|---|
| २१०८+√डप् ( डप ) १०/१३७ संघाते ( आ ) | | √डम्प् ( डपि ) १०/ संघाते ( प )। |
| क्षी-च-जै-शा × | मै-सा-काकृ-कात-हे। | |
| | संहतौ—वो ( उ )। | √डम्भ् ( डभि ) १०/ संघाते ( प ) |

हिन्दी०—डप्पू = स्थविष्ठम्।

| | | |
|---|---|---|
| २१०९ √डम्प् ( डपि ) १०/१३४ संघाते ( प ) | | √डप् ( डप ) १०/ संघाते ( आ )। |
| मै-सा-श-च-काकृ-कात × | क्षी-जै-शा-हे। | |
| | संहतौ—वो ( उ )। | |
| | अभिमर्दने—हे। | |

| | | |
|---|---|---|
| २११०+√डम्ब् (डबि) १०१/३६ क्षेपे ( प ) इति | | √डम्ब् ( डबि ) १/२०६ aa मर्दने (प) काकृ। |
| मै-सा-श-च-जै-काकृ | चन्द्रः—क्षी। | |
| कात-शा × | क्षी-हे। | |
| | नोदे—वो। | |
| | उपहासे, विडम्बनायाम्— | |
| १/?, प्रयोज. | 'वि'-उपसर्गसहितः—ह्वि.। | |

संस्कृत०—डम्बराडम्बरौ चैव ददौ धाता महात्मने–महाभार. ९,२,४१। ऋतुर्विडम्बयामास–रघु. ४,१७=अनुचकार ( संजी. )। विडम्बयत्यस्तनिमग्नसूर्यम्–रघु. १६,११=अनुकरोति ( संजी. )। विडम्बयति–यशस्तिल. च., ५ आश्वा. ११५ श्लो.=विगोपयति। आडम्बरः–यशस्ति. च. २ आश्वा., ९८ श्लो.=शोभा।

प्राकृत०—{डम्बर=आडम्बरः, आटोपः–उप. १४२ टी.; पिंग.।
डम्बर=धर्मः, औष्ण्यम्, प्रस्वेदः–दे. ४, ८।

| | | |
|---|---|---|
| २१११+√डम्भ्.(डभि) १०/१३४ संघाते ( प ) इति | | <√डम्प् ( डपि ) संघाते ( प )। |
| मै-सा-श-च-काकृ- | दौर्गः—क्षी। | √डम्ब् ( डबि ) १०/ क्षेपे ( प )। |
| कात-शा × | क्षी-जै-हे। | √डम्ब् १/२०६ aa मर्दने ( प ) काकृ। |
| | संघे—वो (उ)। | √डम्भ् १०/२०० a संघाते ( आ ) शा। |
| | | √डम्भ् १०/२६५ अभिमर्दने—हे। |

| | | |
|---|---|---|
| २११२+√डिप् (डिप) १०/१३८<br>क्षी-च-जै-शा ×, श | संघाते ( आ )<br>मै-सा-काकृ-<br>कात-हे।<br>संहतौ—वो।<br>(उ)। | √डिप् ( डिप ) १०/१४० क्षेपे ( प )।<br>√डिम्ब् ( डिबि ) १०/ क्षेपे ( प )।<br>√डिम्भ् १/३५२ d धारणे ( प ) काकृ। |
| २११३+√डिप् (डिप) १०/१४०<br>च ×, श(काकृ–√दीप्) | क्षेपे ( प )।<br>क्षी-मै-सा-जै<br>कात-शा-हे।<br>क्षेपणे—जै।<br>नुदि—वो। | √डिम्ब् ( डिबि ) क्षेपे ( प ) इति चन्द्रः—क्षी।<br>√डिप् ( डिप ) ४/ क्षेपे ( प )।<br>√डिप् (डिप) ६/ क्षेपे ( प )।<br>√तिप् ( तिप ) १०/ क्षेपे ( प )।<br>√टिप् ( टिप ) १०/ क्षेपे ( प )। |

**प्राकृत०**—√डेव (सक )=उल्लङ्घने, कूर्दने, अतिक्रमणे। वकृ–डेवमाण–राज.।

| | | |
|---|---|---|
| २११४+√डिम्प् (डिपि) १०/१३५<br>मै-सा-श-च-काकृ-<br>कात × | संघाते ( प )<br>क्षी-जै-शा-हे।<br>संहतौ—वो (उ)।<br>अभिमर्दने—हे। | √डिप् ( डिप ) १०/ संघाते ( आ ) मै।<br>√डम्भ् ( डभि ) १०/ संघाते ( प )।<br>√डिम्भ् ( डिभि ) १०/ संघाते ( प )। |
| २११५+√डिम्ब् (डिबि) १०/१३७<br>मै-सा-श-च-जै-काकृ-<br>कात-शा × | क्षेपे ( प ) इति<br>चन्द्रः–क्षी।<br>क्षी-हे।<br>नोदे—वो। | < √डिप् ( डिप ) क्षेपे ( प )।<br>√तिप् ( तिप ) १०/ क्षेपे ( प )।<br>√स्तिप् ( स्तिप ) १०/ क्षेपे ( प )।<br>√टिप् ( टिप ) १०/ क्षेपे (प)।<br>√दिम्भ् ( दिभि ) १०/ क्षेपे ( प )। |

**प्राकृत०**—डिंब=( १ ) भयम्-से, २,१९; ( २ ) विघ्न:-णाया, १,१–पत्र. ६; ओप.; ३–विप्लव:, डमर:–जं २।

**प्राकृत०**—डिंफिअ=जले पतितम्–दे. ४,९।

| | | |
|---|---|---|
| २११६+√डिम्भ् (डिभि) १०/१३५ मै-सा-श-च-जै-काकृ-कात-शा × | संघाते ( प ) इति दौर्गाः—क्षी। क्षी-हे। संघे—वो (उ)। | <√डिम्प् ( डिपि ) संघाते ( प )। √डिम् हिंसे-सौ. धा.-वो। √डम्प् ( डपि ) १०/ संघाते ( प )। √डिम्भ् १०/२८० संघाते ( आ ) जै। √डिम्भ् १०/२०० संघाते (आ) शा। √डिम्भ् १०/२६६ अभिमर्दने (आ) हे। √डिम्भ् १/३६२ धारणे ( प ) काकृ। |

**संस्कृत०**—डिम्भकोऽनन्तरोऽभवत्-हरिवंशे भविष्यपर्वणि ३२,१८=स्वनामख्यातः शाल्वदेशाधिपतेर्ब्रह्मदत्तस्य पुत्रः।

**प्राकृत०**—√डिंभ ( सक )=(१) अधःपातने, (२) ध्वंसे, नाशे। वकृ-डिंभंत–कुमा. ७,४२।

**प्राकृत०**—डिंभ=बालकः, शिशुः-महा.; सुपा. १६।

| | | |
|---|---|---|
| २११७+√तंस् ( तसि ) १०/१६७ श-च-जै-काकृ-कात-शा × | अलङ्कारे ( प ) इति दुर्गः—क्षी। क्षी-मै-सा-हे अलङ्कृतौ—वो। प्रयोज. कम्पने—ह्वि.। | √तंस ( तसि ) १/३८५ अलङ्कारे ( प ) क्षी। |

**संस्कृत०**—अतंसयत्–वा. सं. २३,२४।

| | | |
|---|---|---|
| २११८+√तट् ( तट ) १०/४३ मै-सा-च-जै-कात- | आघाते (प) इत्येके—क्षी। | <√तड् ( तड ) आघाते ( प )। |

| | | |
|---|---|---|
| २२४१+√पॄ १०/१५ शा-च-कात-शा × | पूरणे ( प ) क्षी-मै-सा-जै-काकृ-हे । पूर्तौ—वो । | >√पॄ पूरणे (प) इति दुर्गः–क्षी । √पॄ ३/पालनपूरणयोः ( प ) । √पॄ ९/ पालनपूरणयोः ( प ) । √पार् ( पार ) १०/ कर्म-समाप्तौ ( प ) । |

√पृ—प्रयो. —ह्वि ।

**संस्कृत०**—पारयति–तांब्रा. १६,८,८ । पारयते–शब्रा. १८,८,३,३ ।

**प्राकृत०**—√पार=पारङ्गतौ, पूर्तौ । हेकृ–पारित्तए–भग. १२,१ ।

| | | |
|---|---|---|
| २२४२+√प्रथ् ( प्रथ ) १०/१९ क्षी-च-जै-काकृ-कात ×, श | प्रख्याने ( प ) मै-सा-शा-हे । प्रक्षेपे ख्यातौ—वो । प्रयो. प्रसारणे—ह्वि. । | √पथ् ( पथ ) १०/२१ प्रक्षेपे ( प ) सा । √पृथ् ( पृथ ) १०/२० प्रक्षेपे ( प ) । √पृथ् ( पृथ ) १/ प्रख्याने ( आ ) सा । √पार्थ् १०/८६ प्रक्षेपणे(प) हे । √प्रथ् १०/८७ प्रक्षेपणे (प) हे । √प्रथ् १/३१३ प्रख्यातौ (आ) जै । |

**संस्कृत०**—अवस्था वस्तूनि प्रथयति च सङ्कोचयति च–नी. श. ४५=विस्तारयति, गुरूकरोति च । (प्रयोजकतेह नास्ति ) ।

| | | |
|---|---|---|
| २२४३+√प्री (प्रीञ्) १०/२८३ शा-च ×, काकृ ? | तर्पणे (उ) आधृषाद्वा क्षी-मै-सा,-काकृ (प)-कात-शा,-वो (प) । तृप्तौ—जै-हे । | √प्री ( प्रीङ् ) ४/ प्रीतौ ( आ ) । √प्री ( प्रीञ् ) ९/ तर्पणे कान्तौ च ( उ ) । |

प्रयो. —ह्वि. ।

**संस्कृत०**—प्रीणयन्ति–खि. १,२,९ । ( श्राद्धदेवताः ) प्रीणयन्ति मनुष्याणां पितॄन्–याज्ञ. १,२६८ । सम्यक् संप्रीणयन्–मार्क. पु. २८, १९ ।

**प्राकृत०**—√पीण ( सक )=प्रसादने । कृ–पीणणिज्ज (<प्रीणनीय–)–औप.; कप्प:; पण्ण. १७ ।

७

| | | |
|---|---|---|
| २२४४+√प्रेङ्खोल (प्रेङ्खोल) १०/६४,३८५ मै-सा-श-च-जै-काकृ-कात-शा-हे × | लोकात्–क्षी । चापले—वो । | प्र+√इङ्ख् (इखि) १/ गत्यर्थः (प) । ओलच्‌ प्रत्यये=प्रेङ्खोल इति वागीशः । |

प्रेङ्खदोल—√प्रेङ्खोल—वागीशः ।

**संस्कृत०**—[ प्रेङ्खं हिरण्ययं शुभे कम्–ऋ. ७,८७,५ । प्रेङ्खमारुह्य होता महदुक्थमनुशंसति–काठ. ३४,५ । ] विरेचनप्रेङ्खोलन०–सुश्रुते निदानस्थाने ८ अध्याये ( श. क. द्रु. ) ।

**प्राकृत०**—√पेङ्खोल ( अक )=दोलने, स्पन्दने–णाया. १,१–पत्र. ३१ ।

**प्राकृत०**—√पिङ्खोल ( सक )=दोलने । वकृ–पिङ्खोलमाण–राज. ।

| | | |
|---|---|---|
| २२४५+√बंह् (बहि) १०/२३८ क्षी-मै-श-च-जै-काकृ-कात-शा-हे × (वो) | भासार्थः ( प ) क्षी । | बंहयते–मै. २,१,५; काठ. ११,५=वृद्धौ । |

| | | |
|---|---|---|
| २२४६+√बट (बट) १०/३१५ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो × | ग्रन्थे ( प ) बहवः पठन्ति—सा । | <√वट ग्रन्थे ( प ) । √बट् ( बट ) १/२०६ a परिभाषणे ( प ) शा । √वृत् ६/३५ ग्रन्थे हिंसायां च ( प ) काकृ । √वट् ( वट ) १/वेष्टने (आ) । √वट् ( वट ) १/ परिभाषणे ( प ) मित् । |

**हिन्दी०**—√बटना = ग्रन्थे, वेष्टने ( रज्ज्वादेः ) ।

| | | |
|---|---|---|
| २२४७+√बध् ( बध ) १०/१४ च-शा × (जै—√वध् ) | संयमने ( प ) क्षी-मै-सा-जै-काकृ-कात-हे । | >√बन्ध् ( बन्ध ) संयमने (प) इति चान्द्राः—क्षी । √बध् (बध) १/बन्धने (आ)। |

**संस्कृत०**—स बाधयति लोकांस्त्रीन्—वा. रा. १, १४, १५ । यत्रोभौ बाधयिष्यथः–हरिवंश. ५३२६ ।

| | | |
|---|---|---|
| २२४८√बन्ध् ( बन्ध ) १०/१४ मै-श-च-जै-काकृ-कात × | संयमने ( प ) इति चन्द्रः—क्षी । क्षी-सा-शा-हे । | ध्वनिसादृश्यानि पूर्ववत् । √बन्ध् ( बन्ध ) ९/ बन्धने ( प ) । |

प्रयो. द्वि. ।

**संस्कृत०**—बन्धयामि–वनदुर्गो. ४३४:२१ । बन्धयेत्–ब्रबि. ७५; योशि. ५,२८; बन्धयिष्यति वा पाशैः–वा. रा. २,८४,८; (शब्रा. १३,५,४,४–अश्वं बन्धयति ?) ।

**हिन्दी०**—√बाँधना=संयमने ।

| | | |
|---|---|---|
| २२४९+√बर्ह् (बर्ह) १०/१२४ श-च-जै-वो × | हिंसायाम् (प) क्षी-मै-सा-काकृ-कात-शा-हे । | √वर्ह् (वर्ह) १/ परिभाषणहिंसादानेषु (आ)। √बर्ह् (बर्ह) १/ प्राधान्ये (प)। |
| २२५०+√बर्ह् (बर्ह) १०/२४४ च-काकृ × (मै-सा-काकृ-कात-हे-वो—√वर्ह्) | भासार्थः (प) क्षी-शा-हे । भाषार्थः—मै-सा-जै-कात । दीप्तौ—वो । | √बल्ह् (बल्ह) १०/ भासार्थः (प)। |

**संस्कृत०**—यथा ब(व)र्हाणि–चित्राणि–महाभार. १२,४३५४ (भासार्थः)।

**हिन्दी०**—{√बलना, √बरना} (<बर्हणम्)=ज्वलने, अर्चिःक्षेपणेन सह ज्वलने (भाषार्थः)। ज्वलन–>वलन–>वलना>बरना—इत्यपि व्युत्पत्तिः ।

**हिन्दी०**—√बहराना (<बहरना<बरहना>बर्हणम्) = दुःखविस्मरणाय चित्तप्रसादाय च तथाभाषणे (भाषार्थः)।

| | | |
|---|---|---|
| २२५१+√बल् (बल) १०/८९ श-च जै-काकृ-कात-शा-हे × | प्राणने (प) मित् क्षी-मै-सा । जीवने—वो । | √बर्ह् (बर्ह) १०/ भाषार्थः (प)। √वल् १०/ नीरूपणे (आ) वो । √बल् १/ दाने वधे नीरूपणे (आ) वो । |

**संस्कृत०**—बलवान्–मनु. २,२१५ ।

**हिन्दी०**—√बलना (<बलनम्) इयमपि व्युत्पत्तिः शक्यते भवितुम्, प्राणनार्थकस्य ज्वलनार्थकत्वात् । ज्वलने सति प्राणनम्, निरुद्धौ सत्यां निष्प्राणतेति ।

| | | |
|---|---|---|
| २२५२+√बल्ह् (बल्ह) १०/२४५ च × (मै-सा-श-जै-कात-हे-वो-√बल्ह्) | भासार्थः (प) क्षी-शा-हे । भाषार्थः—मै-सा-जै-काकृ-कात । | √बर्ह् (बर्ह) १०/ भाषार्थः (प)। |

संस्कृत०—गच्छ बल्हिकान्–अ.वे. ५,२२,७।

हिन्दी०—√बहलाना (<बहलना<बलहना<बल्हनम्) = दुःखविस्मरणाय चित्तप्रसादाय च तथाभाषणे।

२२५३√बष्क (बष्क) १०/२६९ क्षी-मै-सा-च-काक्र-कात-शा-हे-वो × (जै√बष्क् १०/१६५) | दर्शने (प) सा-जै। | √बष्क् १/४१२ गतौ (आ) काक्र। √ब्लेष्क (ब्लेष्क) १०/ दर्शने (प)।

संस्कृत०—वत्से बष्कयेऽधि सप्त…… ऋ. १,१६४,५।

हिन्दी०—√बकसना*(फा. बख्श)=सकृपं दाने। क्षमायाम्।

हिन्दी०—बकसा=घासविशेषः पशूनामतिरुचिप्रदः (देश.)।

२२५४+√बस्त् (बस्त) १०/१५२ श-च × (जै-काक्र-कात-हे-वो—√वस्त्) | अर्दने (आ)। क्षी-मै-सा-जै-काक्र-कात-शा-हे।

संस्कृत०—श्वानं बस्तो बोधयितारमब्रवीत्–ऋ. १,१६१,१३; वा. सं १,४९; शब्रा. १४,४,२,९। बस्ताजिन०–कात्या. श्रौ. १४,५,१५।

प्राकृत०—वत्थि (<वस्तिः)=दृतिः–भग. १,६,१८,१०; णाया. १,१८; गुदम्–पण्ह. १,३–पत्र. ५३; छत्रावयवविशेषः (शलाकासंयमनस्थानम्)–औप.।

२२५५+√बिल् (बिल) १०/७१ श ?, च-जै-काक्र-कात × | भेदने (प) क्षी-मै-सा। भेदे—शा-हे-वो। | √भिल् (भिल) भेदने (प) इति कौशिकः–क्षी। बिलं भरं भवति बिभर्तेः –निरु. २,१७,१। बिलमं भिलमं भासनमिति वा–निरु. १,२०,२। बिलमम्–भिलमम् = भेदनम् —दुर्गाचार्यः।

संस्कृत०—द्रष्ट.√बिल् (बिल) ६/ भेदने (प)।

२२५६√बुक्क् (बुक्क) १०/१८१ च ×, श (मे-जे—√बुक्क्) | भाषणे (प) क्षी-सा-कात। भाषणे भषणे च —काक्र। | √बुक्क् (बुक्क) १/ भाषणे (प)। 'भषणे' इत्येके–क्षी.।

आभाषणे—शा-हे ।

श्वादिशब्दे—वो ।

**संस्कृत०**—बुक्कम् (बुक् बुक् इत्यव्यक्तं शब्दं करोतीति)=वक्षोऽभ्यन्तरमांस-विशेषः । बुक्करायनृपतिः ( विजयनगर-( विद्यानगर- )-सेण्ट-पीटर्सबर्ग-संस्कृतशब्द-कोशात् । बुक्काघातैर्युवतिनिकटे प्रौढवाक्येन राधा-उद्भटसागरात् ।

२२५७।√बुल् (बुल) १०/६६ निमज्जने ( प ) √बुल् १/२८७।। सेचने ( प )
मै-सा-श-च-जै × क्षी,-काक्र ?-कात शा-हे । काक्र । ४९५ ?
मज्जने—वो । √बुल्ल् १/२४७mm सेचने (प)
प्रयो. टीकायामुपलम्भात् काक्र । २९५ ?
कृत्रिमोऽयं धातुः
—ह्वि. ।

**भारोपीय०**—√* बॉल्, बुल्=पिण्डः । लैति. बुल्ल=गर्तम्, चर्मस्फोटः, कलिका । लिथु.-बुलिस्=बुलिः (हेम. ३,२७३) (>बुरी-हि. )=भगम् ( नितम्बः ) । म. नि. ज. पॉल्ल्=शिरोभागः ( कस्यापि पदार्थस्य ), [ वराङ्गम् ]-वा. पॉकर्नीः ।

**संस्कृत०**—ब्रोलयति-कात्या. श्रौ. ५,५,३० । बुल्व०-शब्रा. ११,५,४,१४ ।

**प्राकृत०**—√बोल (सक)=निमज्जने । बोलइ-सार्ध. १४४ ।

**हिन्दी०**—{ √बोरना*†=निमज्जने ।
√बूरना*‡=निमज्जने ।

**हिन्दी०**—{ √बूड़ना=निमज्जने । महाराष्ट्रि.-√बूलणें ।
√डूबना ( वर्णविपर्ययः )=निमज्जने ।

२२५८+√बुस्त् ( बुस्त ) १०/५५ आदरानादरयोः ( प ) √बुस् (बुस) ४/ उत्सर्गे (प)
जे-काक्र-कात × ,श क्षी-मै-सा-शा-हे । √पुस्त् ( पुस्त ) १०/ आद-
( मै-√बुस्त् ) 'बन्धने' इति चन्द्रः-क्षी । रानादरयोः ( प ) ।
वञ्चने—च ।
आदृतौ—वा ।
√पुस्त् > √बुस्त् इति विकासः ।

**हिन्दी०**—बूथड़ी=आकृतिः, मुखाकृतिः, क्रयविक्रयसहायकानां [ 'दलाल' इत्य-भिधेयानाम् इति हिन्दी ] भाषा (देश.) ।

२२५९+√बृंह् (बृहि) १०/२५३ भाषार्थः ( प ) √बंह् ( बहि ) १०/ भासार्थः
च × ,श (मै-सा-जै- क्षी-शा-हे । ( प ) ।

कात-वो–√बृंह् ) भाषार्थः—मै-सा-जै-
काक्र-कात ।

**संस्कृत०**—बृंहयति–अशि. ४,१४; अथर्वशिखो. २; शाण्डिल्यो. ३,१; बटुको. ३१६:७ । बृंहयेत्–बृजा. ३,१७=वृद्धौ ? निबृंहयति–महाभाष्ये ६,४,२४,१९४ ।

२२६०+√ब्रीस् (ब्रीस) १०/१२३ हिंसायाम् ( प )
मै-सा-श-च-जै-काक्र-
कात-शा-हे ×
( वो–√व्रीस् )
क्षी ।
> √ब्रूस् ( ब्रूस ) हिंसायाम् (प) इत्येके–क्षी ।

२२६१+√ब्रूस् ( ब्रूस ) १०/१२३ हिंसायाम् (प)
च-जे-काक्र-कात ×, श
(वो—√(व्रूस्) ।
इत्येके –क्षी ।
क्षी-मै-सा-शा-हे ।
< √ब्रीस् ( ब्रीस ) हिंसायाम् ( प ) ।
√बूष् १०/४४६ हिंसायाम् ( प ) काक्र. ।
√ब्रूष् १०/५१ हिंसायाम् ( प ) कात. ।

२२६२+√ब्लेष्क (ब्लेष्क) १०/३५७ दर्शने (प)
मै-सा-श-च-जै-काक्र-
कात ×
( शा—√ब्लेष्क् )
( वो—√ब्लेष्क् )
क्षी-शा-हे ।
दृशि—वो ।
वि+√लक्ष् (लक्ष) १/ दर्शनाङ्कनयोः ( आ ) ।
√वष्क ( वष्क ) १०/ दर्शने ( प ) सा ।
√विष्क ( विष्क ) १०/ दर्शने ( प ) मै-सा ।

**संस्कृत०**—अप्सु ब्लेष्केण, अन्येन मृत्युना–काठ. २३,६; ब्लेष्कोऽसि निर्ऋत्याः पाशः–३७,१३ ।

२२६३+√भक्ष् (भक्ष) १०/२२ अदने ( प )
च ×, श
क्षी-मै-सा-जै-काक्र-
कात-शा-हे ।
भक्षणे—वो ।
प्रयो.—ह्वि. ।
√भज् (भज) १/ सेवायाम् ( उ ) ।

**संस्कृत०**—भक्षयति–तै. ६,४,९,४; शौ. ९,११,७—११; तैब्रा. १,४,१०,७ ।

**प्राकृत०**—√भक्ख (सक)=भक्षणे । भक्खेइ–महा. । कर्म.–भक्खिज्जइ–कुमा. ।

बुन्देली० –{√भकना / √भखना}=भक्षणे।

२२६४+√भज् (भज) १०/२०१ च×, श — विश्राणने (प)। क्षी-मै-सा-जै-काकृ-कात-शा-हे। पाके—वो। — √भज् (भज) १/ सेवायाम् (उ)। √भञ्ज् (भञ्जो) ७/ आमर्दने (प)।

प्रयो.—ह्वि.।

विश्राणनम्=दानम्—क्षी।

विश्राणे ='विवेचने' इत्यन्ये—क्षी।

**भारेनीय०**—अवे. बख्श्इति=( भक्षयति )=ददाति–अवे. यस्न ९, २२ [राजा चिद् यं भगं भक्षीत्याह–ऋ. ७,४१,२ = दाने]। पारस्य.–बख्शीदन, ( बख्शना, बख्शीश् )–'अवेस्ता'।

**संस्कृत०**—पुष्पभाजनम्–शाकु. ४ (मुम्बा. सं.)। भाजनं विश्वमूर्ते–मालतीमा. १, ३।

**पालि०**—भजति (=विभाजने)–सुत्तनिपात ९५८; जातक १,२१६=३,५१०। भाजेति–विनय. ४,२२३।

२२६५+√भञ्ज् (भजि) १०/२५३ च×, श — भासार्थः (प) क्षी-शा-हे। भाषार्थः—मै-सा-जै-काकृ-कात। भासि—वो। — ध्वनिसादृश्यानि पूर्ववत्।

२२६६+√भण्ड् (भडि) १०/५२ श(काकृ—√भन्द् [ भदि ]) — कल्याणे (प) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। — √भण्ड् (भडि) १/ परिभाषणे (आ)। √भन्द् ( भदि ) १/ कल्याणे (आ)। √भन्द् (भदि) १०/ कल्याणे (प) इति दुर्गः—क्षी।

**संस्कृत०**—भण्डीरः [ = कल्याणे वृत्तिः ] = वटः–सार. २५५,४; वा. रा. ३,७५,२४।

**प्राकृत०**—√भंड ( सक ) = [ साधूनां भोजनोत्सवादौ ] संग्रहे। भंडेइ–सुख. २,४५।

२२६७+√भन्द् (भदि) १०/७९ मै-सा-श-च-जै-काकृ-शा × | कल्याणे (प) इति दुर्गः—क्षी। क्षी-कात-हे। शुभे—वो। | √भण्ड् (भडि) १०/५२ कल्याणे (प)। √भन्द् (भदि) १/ कल्याणे (आ)।

२२६८+√भर्त्स् (भर्त्स) १०/१५० श-च × | संतर्जने (आ) क्षी-मै-सा-जै-काकृ-कात-शा-हे। भर्त्से—वो (उ)।
प्रयो.—ह्वि.।

भारोपीय०—√*भेर्ध् (अथवा–√*भ्रेध् (?)=छेदने–वा. पॉकर्नीः।

संस्कृत०—भर्त्सनात्–शिशि. ३८१:१६। भर्त्सयन्ति स्म वैदेहीम्–वा. रा. ५, २५, १३। त्वा भर्त्स्यामि दूषयिष्यामि–अ. वे. ३,९,५ (पाठदोषः) उदभर्त्सत–शांब्रा. १२,२३,१। परिभर्त्सन्ती–महाभार. ३,१६१४१। लक्ष्ये भर्त्सयतीति दृश्यते–क्षी।

हिन्दी० –भर्सन*† (<भर्त्सनम्) = निन्दा।

२२६९+√भल् (भल) १०/१६९ श-काकृ ?, च × | आभण्डने (आ) क्षी-मै-सा-जै-काकृ-कात-शा-हे। नीरूपणे—वो।
यौ. क्रि, प्रयो.—ह्वि.।
आभण्डनम्=निरूपणम्—क्षी।

भारोपीय०—√*भेल्=दीप्तौ–वा. पॉकर्नीः।

संस्कृत०—न निभालयसे–छान्दोग्यो. ६,१२,२; ६,१३,२। निभालय–कठो. १, ६। (विज्ञप्तिम्) संभालयामास–नैष. ६,७६।

प्राकृत०—√भल (सक)=सम्भालने। भलिज्जासु–सुपा. ५४६।
हिन्दी०—√भालना=अवधानेन दर्शने, (२) गवेषणे।
हिन्दी०—√निहारना (<निभालनम्)=दर्शने।

२२७०+√भाज (भाज) १०/३३३ श × | पृथक्कर्मणि (प) क्षी-मै-सा-काकृ-कात-शा-हे। पृथक्करणे—जै | √भज् (भज) १०/विश्राणने (प)। √भज् (भज) १/ सेवायाम् (उ)।

पृथक्क्रियायाम्—च ।
पृथक्कृत्याम्—वो ।
प्रयोज.—ह्वि. ।

**संस्कृत०**—शिवतमो रसस्तस्य भाजयतेह नः- ऋ. १०,९,२ । रसेन भाजयति- शब्रा. ३,६,१,१२ । राजतं भाजनम्—महाभार. १३,१११,१०२ ।

२२७१+√भाम (भाम) १०/३१९ शा-च × | क्रोधे ( प ) क्षी-मै-सा-जै-काकृ-कात-शा-हे । कोपने—वो । | √भाम् (भाम) १/ क्रोधे (आ) ।

**संस्कृत०**—प्र रुजन्ति भामाः—ऋ. ५,२,१० । तिङ्रूपालाभे निर्णेतुं न शक्यते, कृद्रूपाणां भ्वादेरपि सिद्धेः ।

२२७२+√भिल् (भिल) १०/७१ मै-सा-श-च-जै-काकृ-कात-शा × | भेदने (प) इति कौशिकः—क्षी । क्षी·हे । बादिवत् (=भेदने) —वो । | <√बिल् (बिल) भेदने (प) । बिलमं भिलमं भासनमिति वा—निरु. १,२० । √भिद् ( भिदिर् ) ७/ विदारणे ( उ ) ।

**संस्कृत०**—अन्त्यजाश्च चर्मकाररजकनटबरुडकैवर्तकभिल्लाः सप्त—प्रायश्चित्तेन्दु. १९,b ।

**प्राकृत०**—[√भेल (सक)=मिश्रणे [ √'भेलववुं'—गुर्जरभा. ]—पि. २०६ । ]

**हिन्दी०**—भेला * †=( १ ) युद्धम्, ( २ ) साक्षात्कारः ।

**हिन्दी०**—√भेंटना=साक्षात्कारे ।

२२७३+√भू (भुवः) १०/२०७ च ×, श | अवकल्कने ( प ) क्षी-मै-सा-कात-हे । अवकल्पने—काकृ-शा । भावकरणे—जै । 'विकल्कने' इति नन्दी —क्षी । शुद्धिचिन्तयोर्मिश्रणे [च]—वो । | √भू १/१ सत्तायाम् ( प ) । √भू १०/२९० प्राप्तौ (आ) ।

अवकल्कनम्=मिश्रीकरणम्—क्षी; पीडनम्—मै १९९ । पुरुषकारे—अवकल्कनम्= चिन्तनम् इति काश्यपः—सा १०/२१२ ।

**संस्कृत०**—भावयति—ऐआ. २,५,१; ऐतरेयो. ४,२; हरिवंशे ३,११,१०=(आत्मत्वेन) कल्पयति (नील.); १,१८,६९=पुनाति (नील.)—द्रष्ट. वोपदेवार्थः। भावितम्—महाभार. १२,२१६,९=संस्कृतम् (नील.)। भावना—नैष. १,२९=वासना, चिन्तनम् (प्रका.)।

**प्राकृत०**—√भाव (सक)=गुणाधाने, वासितत्वे, (२) चिन्तने। भावेइ—विवे. ९८।

**हिन्दी०**—[भावना=रुचौ।]

| | | |
|---|---|---|
| २२७४+√भू १०/२९० शा-च-जै-शा-हे × | प्राप्तौ (आ) क्षी-मै-सा-काकृ-कात-वो। | √भू (भुवः) १०/ अवकल्कने (प)। |

अन्ये तु पुराणव्याकरणेषु "भुवो णिङ्" इति सूत्रस्य णिङो ङकारः प्रत्ययान्तादात्मनेपदार्थः—सा १०/३०२, लीलाशुक-(पुरुषकार)-धनपालशाकटायनादयो णिजभावपक्षे परस्मैपदमेव ब्रुवते—सा १०/३०२।

**संस्कृत०**—भवते-मुण्डको. ३,१,४; श्वे. २,१४; महाभार. १३,२९,४७। भवन्ते—इ. १३:१२। भावयस्व—वरा. २,४५। भवे—महाभार. १२,३०३,३१=प्राप्नुयाम्=आत्मानं जानीयामित्यर्थः (नील.)। बुभूषेत्—महाभार. ५,१,१५=प्राप्तुमिच्छेत्। तङभाव आर्षः (नील.)।

**प्राकृत०**—√भव=(१), प्राप्तौ, (२) अक-सत्तायाम्। भवइ—कप्पः; महा.।

| | | |
|---|---|---|
| २२७५+√भूष् (भूष) १०/१९७ शा-च × | अलङ्कारे (प) क्षी-मै-सा-जे-काकृ-कात-शा-हे। भूषणे—वो। | √भू (भुवः) १०/अवकल्कने (प)। √भू १०/ प्राप्तौ (प)। √भू १/१ सत्तायाम् (प)। |
| प्रयोज. | —ह्वि.। | |

**संस्कृत०**—भूषयन्ति—सार. २६३:१५। स्वर्णेन भूषयिष्यामि ते तनुम्—वा. रा. २,८,४६ (२,३९,१७)।

गुणो भूषयते रूपं शीलं भूषयते कुलम्।
सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम्॥ वृद्धचाण. ८,१५।

**प्राकृत०**—√भूस (सक)=सज्जायाम्, (२) अलङ्कृतौ। भूसेमि—कुमा.।

| | |
|---|---|
| २२७६+√भृंश् (भृशि) १०/२५२ क्षी-मै-शा-च-जै-काकृ-कात-शा-हे-वो × | भासार्थः (प) स्वामिकाश्यपानुसारेण लिख्यते—सा। |

| | | |
|---|---|---|
| २२७७+√भ्रूण् (भ्रूण) १०/१५९ | आशायाम् ( आ ) | |
| श ? च × (काकृ-√त्रूण् ) ( जै-√भूण् ) | क्षी-सा-जै-काकृ-कात-शा-हे-वो । आशंसायाम्—मै । 'आशङ्कायाम्' इत्येके —क्षी-हे । विशङ्कायाम्—वो । | |

**भारोपीय०**—√*भ्रॉइ=अङ्कुरणे, वृद्धौ, उच्छ्वयने । म. उ. ज. ब्रिउने, ब्रूने= कुक्षिः, उदरम् । लेट्टिश्-ब्रौन=( भ्रूणम् ) अन्त्राणि–वा. पॉकर्नी: ।

**संस्कृत०**—भ्रूण॰–ऋ. १०, १५५, २ । भ्रूणहत्या–तैआ. २, ७, ३ । अपापस्य भ्रूणस्य–भा. पु. ९,९,३४ ।

| | | |
|---|---|---|
| २२७८+√मंह् (महि) १०/२३९ | भासार्थः ( प ) | √मंह् (महि) १/ वृद्धौ (आ) । |
| मै-श-च-जै-काकृ-कात-शा × | क्षी,-हे ? भाषार्थः—सा । त्विषि—वो । | √मह ( मह ) १०/ पूजायाम् ( प ) । |

**संस्कृत०**—[ समिथेषु मंहयम्—ऋ. १०.४८,९=वृद्धौ ] ।

| | | |
|---|---|---|
| २२७९+√मण्ड् (मडि) १०/५१ | भूषायाम् ( प ) | √मण्ड् ( मडि ) १/ च = विभाजने ( आ ) । |
| श | क्षी-च-जै-काकृ-शा-हे । भूषायां हर्षे च—मै-सा-कात । भूषे मोदे—वो । | √मण्ड् (मडि) १/ भूषायाम् ( प ) । √मद् ( मदी ) १/ हर्षग्लपनयोः ( प ) । |
| यौ. क्रि., प्रयोज. | —ह्वि. । | √मद् (मदी) ४/ हर्षे (प) । √मन्द् (मदि) १/ मोदमदस्वप्नगतिषु ( आ ) । |

**संस्कृत०**—मण्डयन्ति–त्रिपुरो. ४ । [ मण्डनात्–गोच. ६८,१४ ] ।

**पालि०**—मण्डेति–जातक ३,१३८ ।

| | | |
|---|---|---|
| २२८०+√मद् ( मद ) १०/१७३ | तृप्तिशोधने ( आ ) | ध्वनिसादृश्यानि पूर्ववत् । |
| च ×, श | क्षी-हे । 'तृप्तियोगे' इति नन्दी —क्षी । | |

क्षी-मै-सा-जै-काकृ-
कात-शा-हे-वो ।
प्रयोज. —ह्वि. ।
शोधनम्=सम्पत्तिः—क्षी ।

**संस्कृत०**—मादयध्यै-ऋ. १,१६७,१; ते त्वा मदा मादयन्तु-७,२३,५ ।

२२८१+√मद् (मन) १०/१७७ च×, श

स्तम्भे ( आ )
क्षी-मै-सा-जै, काकृ
(प),-कात-शा-हे ।
अर्चे गर्वके च—वो ।
प्रयोज. —ह्वि. ।
स्तम्भः =गर्वः—क्षी ।
पक्षे मनतीति चन्द्रः—क्षी ।

√मन् ( मन ) ४/ ज्ञाने ( आ ) ।
√मन् ( मनु ) ८/ अवबोधने ( उ ) ।
मनायति-ऋ. १,१३३, ४=स्तुतौ ।

**संस्कृत०**—मानयन्तः-वा. रा. १, १५, ७ = परिपालयन्तः ( तिल. ); मानः-२,५७,१९=अहङ्कारप्रयुक्त इतरतिरस्कारकचित्तविकारः ( तिल. ); विमानशिखराणि-२,५७,१८=सप्तभूमिकगृहाग्रभागाः ( तिल. ) ।

**प्राकृत०**—√मन्न ( सक ) = ( १ ) सम्माने, ( २ ) अनुभवे—उप. १०३६; धर्मवि. ७९ ।

२२८२+√मन्त्र् (मत्रि) १०/१४८ श

गुप्तभाषणे ( आ )
क्षी-मै-सा-च-जै-काकृ-
कात-शा-हे ।
गुप्तोक्तौ—वो ।

ध्वनिसादृश्यानि पूर्ववत् ।

**संस्कृत०**—मन्त्रयन्ते-ऋ. १,१६४,१० । अनुमन्त्रयते-तै. ५,१,६,४; शौ. ९, १४, १० । मन्त्रयामि-पै. १, ९, १ । मन्त्रयेत् परमं मन्त्रम्-मनु. ७, ५७ = निरूपयेत् ( मन्वर्थ. ); मन्त्रयेत्-७, १४६ = चिन्तयेत् ( मन्वर्थ. ) । तेनोपमन्त्र्यमाणायाः-महा. विराट् १८, ९ ।

**पालि०**—मन्तेति-दीघ. १,९४,१०४ ।

**प्राकृत०**—√मंत ( सक )=( १ ) गुप्तपरामर्शे, ( २ ) आमन्त्रणे । मंतइ-महा.; भवि.; मंतेदि (<मन्त्रयति )-मृच्छ० ३६३ पृ०=संबोधयति ।

**बुन्देली०**—{√मंतरबौ, √मितुरबौ} (<मन्त्रणम् )

२२८३+√मर्च् ( मर्च ) १०/१०८ शब्दार्थः ( प )
मै-श-च-जै-काकृ-कात- क्षी-सा।
शा-वो × शब्दे—हे।
√मृच् ४/ प्रयोज. पीडने, हानौ—ह्वि.।

√मर्क् १/४१०h आदाने ( आ ) काकृ। √मृज् (मृज) १/ शब्दार्थः ( प ) क्षी ( पुरुषकारे ५७ पृ. )। √मार्ज् ( मार्ज ) १०/ शब्दार्थः ( प )।

**भारोपीय०**—*मेर्क्-: अर्मे.-मॉर्च् = नवीनम्; ललितम्. स्वादिष्ठम्; लिथु. ( स् )-स्मेर्कि।

**भारेनीय०**—मृर्नुचैति=विपत्तौ, हानौ—जू. पॉकर्नीः।

**संस्कृत०**—अरातीवा मर्चयति द्वयेन—ऋ. १,१४७, ४=भर्त्सनायाम्, विपत्तौ, संकटे। भर्चयसि—शौ. १३,१,४०।

२२८४+√मह ( मह ) १०/३१४ पूजायाम् ( प )
श × क्षी-मै-सा-च-जै-काकृ-
कात-शा-हे।
पूजे—वो।
यौ. क्रि.; प्रयो. ह्वि.।

महयति—निघ. ३,१३ = अर्चतिकर्मा। √मह् ( मह ) १/ पूजायाम् ( प ) चुरादौ स्मरति क्षीरस्वामी। √मही ( महीङ् ) कण्ड्वा. ३४ पूजायाम् ( आ )। महीयते—ऋ. १,१८२,३।

**भारोपीय०**—*मेग् ( ह् )-: मेगू ( ह् )=महत्। अल्बे. मथ्, मधि=महत् (मही)— जू. पॉकर्नीः।

**संस्कृत०**—महयते—ऋ. ७,३२,९; शौ. २०,८२,२। महयति—तै. १,७,१,६; शब्रा. १,१,३,७। महयन्ति—तैब्रा. ३,२,८,३।

**प्राकृत०**—√मह ( सक ) = पूजायाम्। महइ—कुमा.।

२२८५+√मान् ( मान ) १०/२८९ पूजायाम् ( प )
श × ( शा—√मन् ) आधृषाद्वा।
क्षी-मै-सा-च-जै-काकृ-
कात-शा-हे।
अर्च्चे—वो।

द्रष्ट.√मन् ( मन ) १०/ स्तम्भे ( आ )।

**संस्कृत०**—मानयित्वा च तापसम्-वा. रा. ३,५,२४ (गी. प्रे. सं.)। नास्त्यत्र प्रयोजकत्ता। मानयन्तश्च ते वाक्यम्-वा. रा. १,१४,१५। मानयामास पौरजानपदान्-महाभार. १,४८६७। साधु मानयेत्-भा. पु. ७,७,३२। या चैनं नावमानयेत्-मनु. २,५०=प्रत्याख्यानेन नावमन्येत ( मन्वर्थ. )।

**पालि०**—मानेति-पेतवत्थु ५४।

२२८६+√मार्ग् ( मार्ग ) १०/८० संस्कारगत्योः ( प ) क्षी-सा। सर्पणे संस्कारे च-वो। मै-श-च-जै-काकृ-कात-शा-हे× √मृज् ( मृजूष् ) २/ शुद्धौ ( प )। √मर्क् ( मर्क ) सर्पे-सौ. धा.—वो। √मृज् (मृजूष् १०/ शौचालङ्कारयोः (प) आधृ०।

**संस्कृत०**—अगायतां मार्गविधानसम्पदा-वा. रा. १,४,३६=गानं द्विविधम्-मार्गो देशी च। तत्र प्राकृतावलम्बि गानं देशी। संस्कृतावलम्बि तु गानं मार्गः-( तिल. )। अत्र मार्गधातोः संस्कारोऽर्थः सुस्पष्टः।

२२८७+√मार्ग् (मार्ग) १०/२९३ अन्वेषणे ( प ) आधृ-षाद्वा। क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। अन्वेषे—वो। संस्कारे चेत्यधिकं क्वचित्-क्षी। श× ध्वनिसादृश्यानि पूर्ववत्।

१/ यौ. क्रि.; प्रयो. —मार्गणे—ह्वि.।

वस्तुतः'मार्ग' इत्यस्य नामधातुः-ह्वि.।

**संस्कृत०**—मार्गन्तु-वा. रा. ४,४०,२१; मार्गत-२,९९,३; महाभार. ३,८८६२; भूय एव स मार्गति-१२, ६६१२। मार्गयिष्यति तत्समाम्-शत्रुञ्जयमा. १४,१४६। मार्गमाणाः पदन्यासम्-महाभार. विराट. २५,११।

**पालि०**—मग्गेति-मज्झिम. १,३३४; संयुत्त. २,२७०। प्रयोज.-मग्गापेति-पेतवत्थु ११२।

**प्राकृत०**—√मग्ग ( सक ) = ( १ ) याचने, ( २ ) अन्वेषणे। मग्गइ-उव.; मग्गमाणेण ( <मार्गमाणेन)-मृच्छ. ४५२ पृ. चौ. सं; मग्गेदि-मृच्छ. ५४३ पृ. चौ. सं.।

**हिन्दी०**—√माँगना ( <मार्गणम् )=याचने।

| | | |
|---|---|---|
| २२८८+√मार्ज् (मार्ज) १०/१०९ (श) च × | शब्दार्थः (प) क्षी-मै-सा । शब्दे—जै-शा-हे । शुद्धौ—काक्र । शब्दार्थे—कात । मृजा-ध्वन्योः – वो । | द्रष्ट.√मर्च् (मर्च) १०/ शब्दार्थः (प) । √मृज् (मृजूष्) २/ शुद्धौ (प) । |

संस्कृत०—[ग्रामस्य मार्जनि–लाख्या. ४,३,११ ।]

| | | |
|---|---|---|
| २२८९+√मिञ्ज् (मिजि) १०/२१८ क्षी-श-च-जै-काक्र-कात-शा-हे-वो × | भाषार्थः (प) मै-सा । | √मज् (मज) १/ शब्दार्थः (प) । √मुञ्ज् (मुजि) १/ शब्दार्थः(प) । |

संस्कृत०—मिञ्जिकामिञ्जिक०–महाभार. ३,१४५२३; १४५२८ ।

| | | |
|---|---|---|
| २२९०+√मिद् (मिद) १०/८ मै-जै-शा × | स्नेहने (प) इति कौशिकः–क्षी । क्षी-सा-च-काक्र-कात-हे । स्निहि—वो । | <√मिन्द् (मिदि) स्नेहने (प) । √मिद् (ञिमिदा) १/ स्नेहने (आ) । √मिद् (ञिमिदा) ४/ स्नेहने (प) । √मिण्ट् १०/९० स्नेहने (प) हे । √मिण्ड् १०/१४५ व्यभिचारे (प) काक्र । मित्रः । मेदयतेर्वा–निरु. १०,२१,४ = स्नेहनार्थस्य–दुर्गाचार्यः । |

संस्कृत०—यूयं गावो मेदयथा कृशम्–ऋ. ६,२८,६ ।

| | | |
|---|---|---|
| २२९१+√मिन्द् (मिदि) १०/८ च-काक्र-कात ×, श | स्नेहने (प) क्षी-मै-सा-जै-शा-हे । स्निहि—वो । | <द्रष्ट.√मिद् (मिद) स्नेहने (प) । |

[ प्रयोज. —ह्वि. ]

भारोपीय०—√* मॆन्द् (आ,–ऑय् )=आकाङ्क्षायाम् । लैति. मॆन्दुम्, मॆन्द्= आकाङ्क्षायाम्–वा. पॉकर्नीः ।

**संस्कृत०**—मिन्दा–तै. ३,२,५,४। मित्रं मिन्देर्नन्दतेः प्रीयतेर्वा–महाभार. ८,१९९२।

२२९२√मिश्र (मिश्र) १०/३६५ सम्पर्चने (प) √मिश् (मिश) १/ शब्दे
श (जै-शा–√मिश्र्) क्षी-जै-काकृ-कात- रोषकृते च (प)।
शा-हे।
सम्पर्के—मै-सा-च।
युत्याम्—वो।

**भारोपीय०**—√* माइकु्=मिश्रणे।

**भारेनीय०**—अवे. मिस्वन्=मिश्रणम्–वा. पॉकर्नीः।

**संस्कृत०**—मिश्रम्–तै. १,७,६,४; शौ. १२,३,४४; पै. १७,४०,४। मिश्राः–तै. ४,६,५,१। आर्यमिश्राणाम्–वा. रा. २,८२,१९=पूज्यानाम् (तिल.)। मिश्रयन् समरे–हरिवंश. १३३०१। व्यामिश्रकेषु–वा. रा. २,१,२७=प्राकृतादिमिश्रितनाटकादिषु (तिल.)।

**प्राकृत०**—√मीस (सक)=मिश्रणे। कर्म.–मीसिज्जइ–पि. ६४।

**अपभ्रंश०**—√मिसल (सक)=मिश्रणे [मिसलणें–महाराष्ट्रि]–मिसलइ–भवि.।

**हिन्दी०**—√मिसना*† (<मिश्रणम्)=मिश्रणे (अक)।

**हिन्दी०**—√मासना*† (<मिश्रणम्)=मिश्रणे (अक)।

२२९३+√मी १०/२७४ मतौ मनने (प) आधृषाद्वा मिनोतिः श्रयतिकर्मा–निरु.
क्षी। ७,२९,१। मिनाति–निघ.
मतौ—हे। २,१४=गतिकर्मा।
गतौ—मै-सा-जै-काकृ-कात-
शा-हे।
गत्यां मत्याम्—वो।

**संस्कृत०**—[ आ च परा च मेष्यन्–ऐब्रा. ४,२०।

२२९४+√मुच् (मुच) १०/२१५ प्रमोचने (प) √मुच् (मुच) १/ कल्कने
(श) च× क्षी-मै-जै-काकृ-कात- (आ) इति चन्द्रः—क्षी।
शा हे। √मुच् (मुच्लृ) ६/ मोक्षणे
प्रमोचने मोदने च— (उ)।
सा।
प्रयोजने—हे।
मोक्षे—वो।

प्रयो.—द्वि.।

संस्कृत०—किं न मोचयते रामम्—वा. रा. २,७८,३। मोचयेदेनसः—मनु. ३,३७।

| | | |
|---|---|---|
| २२९५+√मुट्ट् ( मुट ) १०/७९ श ( क्षी—√पुट्ट् ) | संचूर्णने ( प ) मै-सा-च-जै-काकृ-कात-शा-हे। क्षुदि—वो। | √मुट्ट्, १०/२६ b संचूर्णने ( प ) काकृ। √मुट्ट्, १/११८ प्रमर्दने (प) काकृ। |

संस्कृत०—प्रति मोटयतु–छन्दोम. ३७।

प्राकृत०—√मोड ( सक )=मोटने, कौटिल्ये ( २ ) चूर्णने, आमर्दने। मोडसि—सुर. ७,६।

| | | |
|---|---|---|
| २२९६+√मुद् (मुद) १०/२१३ श-च × | संसर्गे ( प ) क्षी-मै-सा-जै-काकृ-कात-शा-हे-वो। | √मुद् (मुद) १/ हर्षे (आ)। √पुट् ( पुट ) ६/ संश्लेषणे ( प )। |
| २२९७+√मुल् (मुल) १०/६७ मै-सा-श-च-जै-काकृ-कात-शा × | रोहणे (प) इति नन्दी—क्षी। क्षी-हे-वो। | <√मूल् (मूल) रोहणे (प)। √मुल् १/४९८ c धारणे ( आ ) काकृ। √मुल्ल् १/४९८ d धारणे ( आ ) काकृ। |
| २२९८+√मुस्त् ( मुस्त ) १०/९७ श-च-काकृ × (मै—√पुस्त्) | संघाते ( प ) क्षी-मै-सा-जै-कात-सा-हे। संहतौ—वो। | √मुस्त् १०/४३ गन्धे (प) काकृ। √मुक्ष् १/२७९ संघाते (प) काकृ। √मृक्ष् ( मृक्ष ) १/६५३ संघाते ( प ) सा। <मुष्ट—(मुष्टिः)। |

संस्कृत०—मुस्तके द्वे प्रकीर्तिते [मुस्तयति=संहतीकरोति रुधिरमिति। √मुस्त्+कः। ततः संज्ञायां कन्]=स्थावरविषभेदः–सुश्रु. कल्पस्थाने २ ( श. क. द्रु. )। मुस्तक०–बृहत्सं. ७७,९।

| | |
|---|---|
| २२९९+√मूत्र (मूत्र) १०/३५३ च-जै-शा- ×,श ( जै—√मूस्त्र् ) | प्रस्रवणे ( प ) क्षी-मै-सा-जै-काकृ-कात-हे। प्रस्रवे—वो। |

भारोपीय०—*मॉइ=मनाक् क्लिन्नम्। पु. आइरिश्-मून्=मूत्रम्-वा. पॉकर्नीः।

भारेनीय०—अवे. मूथ=अपावित्र्यम्, मालिन्यम्, धूलिः। ( नीदेर्लै. माद्देर् )-वा. पॉकर्नीः।

संस्कृत०—मूत्रितः-नारदपरिव्राजको. ५,२८। अवमूत्रयतः-मनु. ८,२८२=मूत्रप्रक्षेपेणाऽवमानयतः ( मन्वर्थ. )। मूत्रयन्ते-महाभार. ५,३४९३। कुण्डेष्वमूत्रयन् केचित्-भाग. पु. ४,५,१५।

प्राकृत०—√मुत्त ( सक )=मूत्रणे। मुत्तंति-कुप्र. ९२।

२३००+√मूल् ( मूल ) १०/६७ रोहणे ( प ) <√मुल् (मुल) रोहणे (प)।
च ×,श क्षी-मै-सा-जै-कात-शा-हे-वो। प्रतिरोहणे - काक्र। √मू (मूङ्) १/ बन्धने (आ)। √मू+उणा. ४,१०८ ( मवते=बध्नाति वृक्षादिकम् )।

संस्कृत०—मूलं यातुधानस्य वृश्च-ऋ. १०,८७,१०। समुन्मूलयितुं वृक्षान्-इन्दिशे स्प्रूशे २१४२।

२३०१+√मृग ( मृग ) १०/३४४ अन्वेषणे ( आ ) 'मृग' इति संज्ञाशब्दस्य नामधातुः!
श क्षी-मै-सा-च-जै-काक्र-कात-शा-हे। मार्गणे—वो।

भारोपीय०—√*मेरॅग्=अपनोदने।

भारेनीय०—अवे. मृग्‌ (Mərγəa)=पक्षी। न. पर्सि. मुर्ग् (Murγ)=पक्षी, ताम्रचूडः-वा. पॉकर्नीः।

संस्कृत०—मृगयन्ते-ऋ. ८,२,६; जै. ४,१६,७; शौ. १०,५,४२। मृगयेते-पै. २०,५६,५। मृगयित्वा बहून् ग्रामान्—महाभार. विराट. २५,५; भूयश्च मृगयामहे—महाभार. विराट. २७,१०। छिद्रं हि मृगयन्त्येते-वा.रा. १,१२,१८ मृगयामि-वा. रा. २,११,२०।

पालि०—मग्गति, मगेति-मज्झिम. १,३३४; संयुत्त. २,२७०।

२३०२+√मृज् (मृजूष्) १०/२९५ शौचालङ्कारयोः ( प ) √मृज् (मृजूष्) २/ शुद्धौ ( प )।
श × (मै-सा√मृज् [मृजू]) आधृषाद्वा क्षी-मे-सा-जै-काक्र-कात-शा-हे। शौचे—च। शुद्धौ भूषे च—वो।

१/ प्रयो. ह्वि.।

**संस्कृत०**—परिमार्जति—वा. रा. २,७२,३१ = परिमार्ष्टि ( तिल. )। यदाश्रु परिमार्जति—महाभार. १२, ३४४०। ललाटं चाप्यमार्जयत्—महाभार. ५, ५५८८। [मदन्तीभिर्मार्जयन्ते—तै. ६,२,२,७ ]; [मृजन्ति वाजिनं घृतेन—ऋ. ५,१,७-तौदादिकः]; न पांसून् परिमार्जति—महाभार. विराट. १६,५१ श्लोकानन्तरं पाठभेदः।

| | | |
|---|---|---|
| २३०३+√मृण्ड् (मृडि) १०/१२४ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो × | छेदने ( प ) आधृषाद्वा—सा। | <√चुण्ट् ( चुटि ) छेदने ( प )। |

आद्येषु व्याख्यानेषु न दृश्यतेऽतोऽप्रामाणिकः पाठोऽस्य—सा।

**बुन्देली०**—√मोंड़बो ( < मृण्डनम् )=मर्दने, छेदने।

| | | |
|---|---|---|
| २३०४+√मृष् (मृष) १०/२९६ श | तितिक्षायाम् ( प ) आधृषाद्वा क्षी मै, सा ( उ ),-जै-कात-शा-हे ( आ ),-काकृ। क्षान्तौ—च-वो। क्षमायाम्—काकृ-कात। | √मृष् ( मृष ) ४/ तितिक्षायाम् ( उ )। |
| प्रयो. | ह्वि.। | |

**संस्कृत०**—मर्षयन्ति—मै. १, ५, १२। मीमृषः-शौ. ३, १५, ४। यो मर्षयति पार्थिवः-मनु. ८,३४६। मर्षयत्यार्तः—मनु. ८,३१३=सहते ( मन्वर्थ. )। मर्षयस्व—वा. रा. ४,५८,३; ६,१२,१; हरिवंश. ७१२९। केशपक्षे परामृष्टा मर्षयिष्यत्यशक्तवत्—महाभारते विराट. १६,५१ श्लोकानन्तरं पाठभेदः।

| | | |
|---|---|---|
| २३०५+√मृष (मृष) १०/२९६ मै-सा-श-च × | तितिक्षायाम् ( प ) क्षी-शा। जै ? क्षान्तौ—काकृ कात-हे-वो। | |

केचिदमुं ( √मृष् धातुम् ) अदन्तत्वोपजीवनार्थं व्यत्यस्य पठन्ति—क्षी।

| | | |
|---|---|---|
| २३०६+√मोक्ष् (मोक्ष) १०/१९८ च ×, श | असने ( प ) क्षी-मै-सा-जै-काकृ-कात-शा-हे। | √मुच् ( मुच्लृ ) ६/ मोक्षणे ( प )। |

क्षेपे—वो ।
'सहने' पाठान्त॰
रम्—क्षी ।

**संस्कृत०**—मोक्षयेत्-ऐब्रा. ७,७। मोक्षयध्वम्-वा. रा. १,६४,१०; महाभार. १, ५३०१। मोक्षयति—सुश्रु. १, १८, ३। मोक्षयासु महीपतिम्—महाभार. विराट. ३३,२१।

| | | |
|---|---|---|
| २३०७+√म्रक्ष् (म्रक्ष) १०/१२१ च×,श | म्लेच्छने ( प ) क्षी-मै-सा-जै-शा-हे । 'अदने' इत्यपि क्वचित् पठ्यते—सा । क्षरणस्निग्धार्थे—काकृ । म्रक्षणं—कात । म्रक्षणे म्लेच्छने—वो । | √म्लेच्छ् ( म्लेच्छ ) १०/ अव्यक्तायां वाचि (प) । |

**संस्कृत०**—स्नेहपत्राणि म्रक्षयित्वा छोरयति-कात्या. श्रौ. ५७८,१९; ५८३,२।

**पालि०**—मक्खेति=म्रक्षणे—जातक ३,२२५; विसुद्धिमग्ग ३४४। ( √मृक्ष् इत्यस्य प्रयोज. ! ) ।

| | | |
|---|---|---|
| २३०८+√म्लक्ष् (म्लक्ष) १०/१२६ | अदने ( प ) इत्यपि क्वचित् पठ्यते—सा । क्षरणस्निग्धार्थे—काकृ । | √म्रक्ष् (म्रक्ष) १०/१२१ म्लेच्छने ( प ) । √भ्लक्ष् ( भ्लक्ष ) १/ भक्षणे ( उ ) । |

| | | |
|---|---|---|
| २३०९+√म्लेच्छ् (म्लेछ) १०/१२२ श-च × ( जै√म्रछ् ) मुद्रणदोषः । | अव्यक्तायां वाचि (प) क्षी-मै-सा-जै-काकृ-शा-हे । कात ? देश्योक्तौ—वो । म्लेच्छने—जै-शा-हे । | |

**संस्कृत०**—द्रष्ट. √म्लेच्छ् १/ ।

| | | |
|---|---|---|
| २३१०+√यक्ष् (यक्ष) १०/१६१ च×,श | पूजायाम् ( आ ) क्षी-मै-सा-जै-काकृ-कात-शा-हे । | √यज् (यज) १/ देवपूजा-संगतिकरणदानेषु (उ)+ इच्छार्थे सन्-इयक्षति |

| | | |
|---|---|---|
| | महि—वो । | <यक्षति, ते । इयक्षति—निघ॰ २, १४=गतिकर्मा । इयक्षति—ऋ. ८,३१ (१५–१८); तै. १,८,२२,४ । यक्षि = यज—निरु. ८,१४, २; ६,१३,१ । |
| १/ | दमने—ह्वि. । | |

**भारोपीय०**—√*इ्अघ्=अनुसरणे, वाञ्छायाम् ।

**भारेनीय०**—अवे. यासैति=काङ्क्षायाम्—वा. पॉकर्नी: ।

**संस्कृत०**—न यासु चित्रं ददृशे न यक्षम्—ऋ. १,१३२,५ ( =पूजा ); प्र यक्षन्त श्रवस्यवः—१,१३,५ । यक्षते—तांब्रा. ९,१०,१ । यक्षामः—वा. रा. ७;४,१२ । सर्वे सन्नन्ता इमे प्रयोगाः √यज् धातोः प्रायेण । विष्णुपुराणीया यक्षशब्दनिरुक्तिस्तु विलक्षणा । तद्यथा—

मैवं भो रक्ष्यतामेव यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु यक्षणात् ॥ १,५,४१ ।

लिङ्गपुराणेऽपि तथा—

एवं च यक्षतिर्धातुर्भक्षणे स निरुच्यते ॥ लिङ्गपु. पूर्वा. ७०,२८ ।

चौरादिकानि रूपाणि नोपलभ्यन्ते ।

**पालि०**—यक्ख=प्रकाशस्य तीव्रकिरणः, देवजातिविशेषोऽपि—विमानवत्थु २२४ ।

**प्राकृत०**—जक्ख=व्यन्तरदेवजातिविशेषः—पण्ह. १,४; औप. ।

**हिन्दी०**—√जकना=आश्चर्ये ।

| | | |
|---|---|---|
| २३११+√यत् ( यत ) १०/२०३ च × ,श | निकारोपस्कारयोः (प) क्षी-मै-सा-जै-शा-हे । खेदबिम्बाच्छादनेषु —काश्च । निकारोपसंस्कारयोः —कात । खेदोपस्करयोः—वो । "निराकारः=परिभवः, इति क्षीरः" इति पुरुषकारः—७६ पृ. । | यातयति—निघ. २,१९= वधकर्मा । |
| प्रयो. | विस्तारे—ह्वि. । | |

संस्कृत०—द्वा जना यातयन्नन्तरीयते–ऋ. ९,८६,४२; मित्रो जनान् यातयति ब्रवाणः–३,५९,१; अधियातयमानः–६,६,४। यातनाः–भवसंतारणो. १,३। यातनानाम्–भस्मजाबालो. २,२१।

प्राकृत०—√जाय (सक)=पीडने, यातनायाम्। जाएइ–उव.।

२३१२+√यन्त्र् (यत्रि) १०/३ श | सङ्कोचने (प) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। | √यन् ८/१७ उद्धारे (उ) काकृ। √जन्त्र् १०/७ सूचने (प) काकृ। √यम् (यम) १/ उपरमे (प)। (नि) √यम्+त्र=√यन्त्र इति वागीशः।

संस्कृत०—सविता यन्त्रैः पृथिवीमरम्णात्–ऋ. १,१४९,१। यन्त्रितकथः—वा. रा. १,७६,१=नियमिता कथोच्चैः कथनं येन सः (तिलक.)। अयन्त्रितहयद्विपा (राजधानी)–वा. रा. २,८८,१९। उपयन्त्रिता–मनु. ११,१७७=अभ्यर्थिता (मन्वर्थ.)। यन्त्रयति–सुश्रु. १,१५,७; १,३५८,८; २,५८,७; २ ३४३,१४। सुयन्त्रितः–मनु. २,११८=शास्त्रनियमितः (मन्वर्थ.)।

पालि०—यन्तेति–जातक १,४१८।

प्राकृत०—√जंत (सक)=वशीकरणे, (२) बन्धने–उपपृ० १३१।

हिन्दी०—जाँता (<यन्त्र-)=पेषणी।

२३१३+√यम् (यम) १०/८७ च-जै-शा ×,श | परिवेषणे (प) मित् क्षी-मै-सा-जै-काकृ-कात-हे-वो। 'अपरिवेषणे' इत्येके पठन्ति—क्षी। | √यम् (यम) च=चकारो मित्त्वमाकर्ष्टुम् (प)। इति दुर्गः—क्षी।

प्राकृत०—√जम (सक)=नियमने, (२) आतञ्चने, स्थिरीकरणे। जमेइ–से. १०,७०।

हिन्दी०—√जमाना=आतञ्चने, स्थिरीकरणे।

२३१४+√यु १०/१७८ च-काकृ ×,श | जुगुप्सायाम् (आ) क्षी-मै-सा-जै-कात-शा-हे। निन्दने—वो। | >√युज् (युजु) कुत्सायाम् (आ) इत्येके—क्षी।

प्रयोज. पार्थक्ये—ह्वि.।

संस्कृत०—ब्रह्मद्विषः सूर्याद्यावयस्व–ऋ. ५,४२,९; अ. वे. १,२,३; ४,२,६; वा. सं. ५,२६; शब्रा. १३,८,३,१३।

| | | |
|---|---|---|
| २३१५+√युज् (युज) १०/१७८ | कुत्सायाम् (आ) इत्येके | <√यु जुगुप्सायाम् (आ)। |
| मै-सा-श-च-जै-कात- | —क्षी। | |
| शा× | क्षी। | |
| | जुगुप्सायाम्—काक्र-हे। | |
| | निन्दे—वो। | |

| | | |
|---|---|---|
| २३१६+√युज् (युज) १०/२५७ | सम्पर्चने (प) आधृषाद्वा | √युज् (युज) ४/ समाधौ |
| च×, श | क्षी-हे। | (आ)। |
| | संयमने—मै-सा-जै- | √युज् (युजिर्) ७/ योगे |
| | काक्र-कात-शा। | (उ)। |
| | संयमे युतौ च—वो। | |
| प्रयोज. | —योगे—ह्वि.। | |

**संस्कृत०**—अयूयुजन्नुष्ट्रखरान्–वा. रा. २,८२,३१। रथान् योजयत–महाभार. १,७९४८। दुःशासनमयोजयत्–महाभार. २, १२९०;………………योजितः–५,५३२ ( = पीडितः )।

**प्राकृत०**—√जोअ ( सक )=योजने। जोएइ–महा.।

**प्राकृत०**—√जोअ ( सक )=(१) समाप्तौ, (२) करणे। जोएइ–सुज्ज. १०,१२–पत्र. १८०।

**प्राकृत०**—√जोज ( सक )=[योजने]–कुप्र. १३०।

| | | |
|---|---|---|
| २३१७+√रंह् ( रहि ) १०/२६१ | भाषार्थः (प) | √रङ्घ् ( रघि ) १०/२३५ |
| क्षी-मै-श-च-जै-काक्र | सा। | भासार्थः ( प )। |
| कात-शा-हे-वो× | | √रंह ( रहि ) १०/३०५ गतौ |
| | | ( प )। |
| | | √लङ्घ् ( लघि ) १०/२३६ |
| | | भासार्थः ( प )। |

| | | |
|---|---|---|
| २३१८+√रंह ( रहि ) १०/३०५ | गतौ (प) | √रंह् ( रहि ) १०/२६१ |
| मै-सा-श-च-जै-काक्र | क्षी-वो। | भाषार्थः ( प ) सा। |
| कात-शा-हे× | | √रह् ( रह ) १०/९३ त्यागे |
| यौ. क्रि., प्रयोज. | —ह्वि.। | ( प ) मित्–सा। |
| | | शेषः पूर्ववत्। |
| | | √रम् ( रमु ) १/ क्रीडायाम् |
| | | ( आ )। |

**संस्कृत०**—वाजे अन्द्रि रंहयन्तः-ऋ. १,८५,५; रंहयन्त आ शवः-८,१९,६ ( = द्रुतगतौ ) ।

२३१९+√रक् (रक) १०/२०९ आस्वादने ( प ) इति चन्द्रः—क्षी । क्षी-मै-सा-जै-काकृ-कात-शा-हे । स्वाद आपने—वो । 'आस्वादने' इति दुर्गः—क्षी-,हे । < √रग् ( रग ) आस्वादने ( प ) । √रस् ( रस ) १०/ आस्वादने स्नेहने (प) । √लक् ( लक ) १०/ आस्वादने ( प ) इति चन्द्रः—क्षी । √रघ् ( रघ ) १०/ आस्वादने ( प ) इत्येके—मै । √लग् ( लग ) १०/ आस्वादने ( प ) । √लिह् ( लिह ) २/ आस्वादने ( प ) ।

श-च ×

**संस्कृत०**—रकसा-(=क्षुद्रकुष्ठ-) सुश्रु. १,२६८,४; शार्ङ्ग. सं. १,७,६५ ।

२३२०+√रग् ( रग ) १०/२०९ आस्वादने ( प ) क्षी-सा-जै-शा-हे । 'आसादने' इति दुर्गः—क्षी,-हे । रक्वत् (=स्वाद आपने) — वो । ध्वनिसादृश्यानि पूर्ववत् ।

मै-श-च-काकृ-कात × ( जै–√रज् [रज]) स्यान्मुद्रणदोषः ।

**प्राकृत०**—[ रइगेल्ल=अभिलषितम्–दे. ७,३ । ]

**हिन्दी०**—√रगाना† ( देश. )=तूष्णीम्भावे ।

**हिन्दी०**—रगा=मयूरः ।

**हिन्दी०**—{रगी / रग्गा}=महीशूर-(मैसूर)-देशोत्पन्नोऽन्नविशेषः ।

**हिन्दी०**—रग ( फा. )=नाडी ।

२३२१+√रघ् ( रघ ) १०/२०१ आस्वादने ( प ) इत्येके—मै । √रघ् (रघ) १/४१२ jj गतौ ( आ ) काकृ ।

क्षी-श-च-जै-काकृ-कात-

| | | |
|---|---|---|
| शा-हे-वो × | मै-सा । | द्रष्ट. √रक् (रक) १०/२०९ आस्वादने ( प )। |
| २३२२+√रङ्घ् ( रघि ) १०/२३५ मै·श·च-जै-काक्र-कात-शा × | भासार्थः ( प ) क्षी-हे । भासार्थः—सा । भासि—वो । | √रंह् ( रहि ) १०/ भाषार्थः ( प ) सा । |
| २३२३+√रच ( रच ) १०/३११ श × (काक्र-√चर् [चर]) वर्णविपर्ययः । यौ. क्रि., प्रयोज. | प्रतियत्ने ( प ) क्षी-मै-सा-च-जै-काक्र-कात-शा-हे । कृत्याम्—वो । उत्पादने—ह्वि. । | रजयति—निघ. ३,१४=अर्चतिकर्मा । |

**भारोपीय०**—√*रेक्–, √*रेक्=आदेशे, व्यवस्थायाम् । गाँथि.–रहन्जन्=सङ्कलने, गणनायाम्–वा. पॉकर्नीः ।

**संस्कृत०**—रचयति–सार. २६८:८; रचयन्ति–२२२:२३ । रचयेत्–शि. ६,४३ ।

**पालि०**—रचित–जातक ५,१५७ ।

**प्राकृत०**—√रय ( सक )=निर्माणे, रचने । रयइ, रएइ–महा. ।

**प्राकृत०**—√रयाव ( सक ) प्रयो.=निर्माणे, रचने । रयावेइ–कप्प. ।

**प्राकृत०**—√रइआव ( सक ) प्रयो.=निर्माणे, रचने–ती. ३ ।

**हिन्दी०**—{√रचना, √रचना†*} = आयोजने, निर्माणे ।

**हिन्दी०**—√राचना*=रचनायाम् ( अप्रयो. ) ।

| | | |
|---|---|---|
| २३२४+√रस ( रस ) १०/३७६ श-च × ना. धा. –ह्वि. । | आस्वादस्नेहनयोः (प) क्षी-मै-सा-काक्र-कात-शा-हे । आस्वादस्नेहनयोः—जै । आस्वादे स्नेहे—वो । | √रस् ( रस ) १/ शब्दार्थः ( प ) । √रस्त् १०/४९ सामग्री-वृद्धौ ( प ) काक्र । |

**संस्कृत०**—रसयति–शब्रा. १४,७,१,२५; रसयेत्–१४,७,३,२४ । रसयते–प्रश्नो. ४,२ । रसती रसना रसान्–महाभार. १२, १०५०४ ( =आस्वादने ); न रस्यति ( दैवादिकः )–१२,११३८३ ।

हिन्दी०—{√रसना, √रिसना†} = शनैर्निश्च्योतने ।

हिन्दी०—रासन=स्वादु ।

| | | |
|---|---|---|
| २३२५+√रह् ( रह ) १०/९३ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो × | त्यागे (प) मित् सा । | √रह् ( रह ) १/ त्यागे (प) । |

यो. क्रि.; प्रयोज. ह्वि. ।

| | |
|---|---|
| २३२६√रह ( रह ) १०/३०४ श × | क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो । |

**संस्कृत०**—न विरहयेदाचार्यम्–शाङ्खा. गृह्य. ४,११ । रहयत्यापदुपेतमायतिः–किरा. २, १४ = त्यजति ( घण्टा० ) । रहयति नृपं स्वार्थपरता—मुद्राराक्ष. ३, ४; मालतीमा. ९,८ ।

| | | |
|---|---|---|
| २३२७+√रिच् (रिच) १०/२६६ च ×, श(काकृ√चिर्) वर्णविपर्ययः । | वियोजनसम्पर्चनयोः ( प ) क्षी-मै-सा-जै-काकृ-कात-शा । सम्पर्चने वियोजने च—हे । सम्पर्कवियोगयोः—वो । | √रिच् ( रिचिर् ) ७/ विरेचने ( उ ) । √रिञ्च् १०/९२ विस्तारे ( प ) काकृ । √रिज् (रिज) १/ गतिस्थानार्जनोर्जनेषु ( आ ) । |

प्रयोज. ह्वि. ।

**संस्कृत०**—अति ह रेचयेद् यदन्यः–शब्रा. ४,६,९,१० । सोमं मातिरीरिचः–शब्रा. ४,४,२,७ । रेचयति कोष्ठागाराणि–दशकुमा. १८७,५ । रेचितपुष्पवृक्षाः (द्विरेफाः)–रघु. ६,७ ।

| | | |
|---|---|---|
| २३२८+√रुंश् ( रुशि ) १०/२५३ क्षी-मै-श-चजै-काकृ-कात-शा-हे-वो × | भाषार्थः ( पा ) सा । | रुशती—निरु. २,२०,१= रोचनशीला (दुर्गाचार्यः) । रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः–निरु. ६,१३,२ । |
| २३२९+√रुंस् ( रुसि ) १०/२५४ क्षी-मै-श-च-जै-काकृ-कात-शा-हे-वो × | भाषार्थः ( प ) सा । | √रुंश् (रुशि) १०/भाषार्थः ( प ) सा । |

| | | |
|---|---|---|
| २३३०+√रुज् ( रुज ) १०/२५५<br>च ×,श | हिंसायाम् ( प )<br>क्षी-मै-सा-जै-काक्र-कात-शा-हे ।<br>हिंसे—वो । | √रुज् (रुजो) ६/ भङ्गे (प) ।<br>√रुश् (रुश) ६/ हिंसायाम् ( प ) । |

संस्कृत०—ताभ्यां ( बाहुभ्याम् ) वक्षस्यरूरुजत्–भा. पु. १०,६७,२३ ।

| | | |
|---|---|---|
| २३३१+√रुट् ( रुट ) १०/१३३<br>श-च-जै-काक्र-कात-शा × | रोषे ( प )<br>क्षी-मै-सा-हे ।<br>'उपघाते' इत्येके—क्षी ।<br>रुषि द्युतौ—वो । | √रुट् (रुट) १/ दीप्तौ (आ) ।<br>√रुट् (रुट) प्रतीघाते (आ) इत्येके–क्षी ।<br>√रुष् (रुष) १/ हिंसार्थः (प) ।<br>√रुष् (रुष) ४/ रोषे (प) ।<br>√रुठ् ( रुठ ) १/ रोषे ( उपघाते ? ) (प) इत्येके —क्षी । |

रुषेत्येनं चन्द्रो मत्वा भ्वादिदिवादिभ्यां ( १/४५८ ) सिद्धमाह–क्षी ।

| | | |
|---|---|---|
| २३३२+√रुट् ( रुट ) १०/२२२<br>मै-सा-श-च-जै-काक्र-कात-शा × | भासार्थः ( प )<br>क्षी-हे ।<br>रुषि द्युतौ—वो । | √रुट् ( रुट ) १०/१३३ रोषे ( प ) ।<br>√रुट् ( रुट ) १/ दीप्तौ (आ) ।<br>रुशती—निरु. २, २०, १ = रोचनशीला (दुर्गाचार्यः) । |
| २३३३+√रुठ् ( रुठ ) १०/१३३<br>मै-सा-श-च-जै-काक्र-कात-शा-हे-वो × | उपघाते [रोषे] (प)<br>इत्येके—क्षी<br>क्षी । | द्रष्ट√रुट् (रुट) रोषे ( प ) । |
| २३३४+√रुठ् ( रुठ ) १०/२४८<br>क्षी-मै-श-च-जै-काक्र-कात-शा-हे-वो × | भाषार्थः ( प )<br>सा । | √रुट् ( रुट ) १०/ भाषार्थः ( प ) । |
| २३३५+√रुष् ( रुष ) १०/१३१<br>च-वो ×,श | रोषे (प) इत्येके—मै ।<br>( क्षी ) मै-सा-जै-काक्र-कात-शा-हे ।<br>रोषणे—जै-शा । | √रुष् (रुष) ४/ रोषे (प) ।<br>√रुट् ( रुट ) १०/१३३ रोषे ( प ) । |

प्रयोज. ह्वि. ।

**संस्कृत०**—रोषयन्निव माम्–वा.रा. ५,३६,३६। रोषये त्वां न भीषये–वा. रा. ६,१३,२३। संरोषयेत्–सुश्रु. २,३३४,१२।

| | | |
|---|---|---|
| २३३६+√रूक्ष (रूक्ष) १०/३५४ शा-च × (जै-शा √रूक्ष्) | पारुष्ये (प) क्षी-मै-सा-जै-काकृ-कात-शा-हे-वो। | √रूष् (रूष) १०/३८५ छुरणे (प)। |

**संस्कृत०** – रूक्षयति–शब्रा. ४,६,७,१२; रूक्षयन्ति–४,६,७,१८। रूक्षः–तांब्रा. २४,१३,२।

| | | |
|---|---|---|
| २३३७+√रूप (रूप) १०/३७९ शा-च × | रूपक्रियायाम् (प) क्षी-मै-सा-जै-काकृ-कात-शा-हे। तत्कृतौ—वो। | रूयते कीर्त्यते रौतीति वा। √रु+उणा. ३,२८ इति पः; दीर्घश्च। |

रूपक्रिया=राजमुद्रादिरूपस्य करणम्, रूपदर्शनं वा–क्षी।

**संस्कृत०**—अरूपयत्–काठ. २१,९; सामरहस्यो. २६०:१९। रूपम्–ऐब्रा. १,१४; शब्रा. १,१,४,२।

**पालि०**—रूपेति–सुत्तनिपात १३२,१४३।

| | | |
|---|---|---|
| २३३८+√रूष (रूष) १०/३८५ मै-सा-शा-च-जै-काकृ-कात-शा-हे × | छुरणे (प) क्षी। विच्छुरणे—वो। | √ऊष (ऊष) १०/४१३ छुरणे (प) हे। |

क्षीरतरङ्गिण्याम् "ऊष क्षुरणे" धातुः पठ्यते। तत्र 'रूष' इति भाव्यम्।

**संस्कृत०**—चन्दनरूषितः–वा. रा. २,४२,१५=छुरितः।

| | | |
|---|---|---|
| २३३९+√लक् (लक) १०/२१० सा-शा-च-जै-शा × | आस्वादने (प) इति चन्द्रः—क्षी क्षी-मै-काकृ-कात-हे। 'आसादने' इति दुर्गः—क्षी, हे। स्वाद आपने—वो। | > √लग् (लग) आस्वादने (प)। √रक् (रक) १०/ आस्वादने (प) इति चन्द्रः—क्षी। √रग् (रग) १०/ आस्वादने (प)। √लिह् (लिह) २/ आस्वादने (प) हकारस्य ककारो 'लेक्ष्यति' इति प्रयोगे दृश्यते। |

**भारोपीय०**—√*लेक्, √*लॆक–: √*लृक्–(जू. पॉकर्नीः)। इँग्लि. √लिक्= आस्वादने, लेहे–वागीशः।

**प्राकृत०**—लउच ( <लकुचः )–औप.; पि. ३६८।

| | | |
|---|---|---|
| २३४०+√लक्ष् ( लक्ष ) १०/५ श | दर्शनाङ्कनयोः ( उ ) क्षी-मै,-सा,-( प ) जै,-काकृ-कात ( प ),-शा-हे । दर्शने—च । दर्शनेऽङ्के—वो । | |
| प्रयोज. | ह्वि. । | |
| अङ्कनम्= | चिह्नम्-क्षी । | |

**संस्कृत०**—लक्षम्–ऋ. २, १२, ४। लक्षयेत्–मै. ४, ४, १०; मैत्रि. ६, ३४। अङ्कैर्लक्षैश्च ताः सर्वा ( गाः ) लक्षयामास–महाभार. ३,१४८५२। लक्षयेत् मनु. १२,२७=अनुभवेत् ( मन्वर्थ. )

**पालि०**—लक्खेति ( 'लक्ख' इत्यस्य नाधा. )–नेत्तिप्पकरण ३०।

| | | |
|---|---|---|
| २३४१+√लक्ष् (लक्ष) १०/१६५ च×,श (कात-√लक्षम) लैपिकी त्रुटिः । | आलोचने ( आ ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । आलोके—वो । | √लक्ष् ( लक्ष ) १०/ दर्शनाङ्कनयोः ( उ ) । |
| प्रयो. | ह्वि. । | |

**संस्कृत०**—लक्षयामहे–वा. रा. १,९,४४। गुणाँल्लक्षयामहे–महाभार. १२,८०२९; अवस्थामेव चात्मानं लक्षये–३,१६७५०। वस्तुतः पूर्वधातोरभिन्नोऽयमवसेयः।

**प्राकृत०**—√लक्ख ( सक ) = ( १ ) ज्ञाने, ( २ ) प्रत्यभिज्ञाने, ( ३ ) दर्शने। लक्खइ–महा.।

**हिन्दी०**—√लखना*†=अनुमितौ

**हिन्दी०**—√लखाना*†=दर्शने ( आलोचने )।

**हिन्दी०**—√लछना†=दर्शने ( आलोचने )।

| | | |
|---|---|---|
| २३४२+√लग् (लग) १०/२१० सा-श-च-जै-काकृ-कात-शा × | आस्वादने ( प ) क्षी-मै-हे । 'आसादने' इति दुर्गः —क्षी-हे । रकौ (=स्वाद आपने) —वो । | √लक् (लक) आस्वादने (प)। √रक् (रक) १०/ आस्वादने ( प )। √रग् (रग) १०/ आस्वादने ( प ) √लिह् (लिह) २/ आस्वादने ( प )। |

भारोपीय०—√*लेक्–, √*लेक्–: √*लूक्–जू. पॉकर्नीः। इँग्लि.–√लिक्=लेहे. आस्वादने–वागीशः।

| | | |
|---|---|---|
| २३४३+√लङ्घ् (लघि) १०/२३६ च×,श | भासार्थः (प) क्षी-शा-हे। भाषार्थः—मै-सा-जै-काकृ-कात। त्विषि—वो। | √लङ्घ् (लघि) १/ गत्यर्थः (आ)। √रङ्घ् (रघि) १/ गत्यर्थः (आ)। √रङ्ग् (रगि) १/ गत्यर्थः (प)। √लङ्ग् (लगि) १/ गत्यर्थः (प)। |

संस्कृत०—[ लङ्घयेत्–इतिहासो. १६:२; शि. ७,६९। ]

| | | |
|---|---|---|
| २३४४+√लज् (लज) १०/१० मै-श-च-जै-काकृ-कात-शा× | अपवारणे (प) इति नन्दी—क्षी। क्षी-सा-हे। अन्तर्द्धौ—वो। | <√जल् (जल) अपवारणे (प)। लजति–निघ. २,१४=गतिकर्मा। √लज् (ओलजी) ६/ व्रीडे (आ)। √लाज् (लाज) १/ भर्जने च (प)। |
| २३४५+√लज (लज) १०/३६१ क्षी-श-च-जै-काकृ-श× | प्राणने (प) मै। प्रकाशे—सा। प्रकाशने—कात-हे। भासने—वो। ('प्रकाशने' इति कथादौ—सा १/२३८)। | √लञ्ज् (लजि) १०/ प्रकाशने (प); प्राणने–मै। |
| २३४६+√लञ्ज् (लजि) १०/३२ क्षी-मै श-च-जे-काकृ-कात-शा-हे× | हिंसाबलादाननिकेतनेषु (प) इत्यपि क्वचिद् दृश्यते—सा। भा–, षट्टार्थे (=निकेतने हिंसे बले दाने)—वो। | <√तुञ्ज् (तुजि) हिंसाबलादाननिकेतनेषु (प)। √लुञ्ज् (लुजि) १०/ हिंसाबलादाननिकेतनेषु—सा। |

| | | |
|---|---|---|
| २३४७+√लञ्ज् (लजि) १०/२२६<br>मै-श-च-जै-काक्र-कात-<br>शा × | भाषार्थः ( प )<br>क्षी-हे।<br>भाषार्थः—सा।<br>भायाम्—वो। | √लञ्ज् ( लजि ) १०/<br>प्रकाशने ( प )। |
| २३४८+√लञ्ज (लजि) १०/३६४<br>श-च-काक्र-कात × | प्रकाशने ( प )<br>क्षी-सा-शा-हे।<br>प्राणने—मै।<br>जै ?<br>भासने—वो। | √लञ्ज् ( लजि ) १०/२२६<br>भासार्थः ( प )। |

भारोपीय०—*( स् ) लॆ-: *( स् )लॄग्=शिथिलम्। नासिक्यम्-√*( स् ) लॆंग्–वा. पॉकर्नीः।

संस्कृत०—लञ्जिका=वेश्या—अचि. ५३३।

| | | |
|---|---|---|
| २३४९+√लड् ( लड ) १०/७<br>श | उपसेवायाम् ( प )<br>क्षी-मै-सा-च-जै-काक्र-<br>कात-शा-हे।<br>उपसेवने—वो।<br>ईप्से—वो। | √लड् ( लड ) १/ विलासे<br>( प )।<br>√लल् (लल) १०/ ईप्सायाम्<br>( आ )। |

√लल्–यौ. क्रि., प्रयो. क्रीडायाम्, लीलायाम्–ह्वि.।

संस्कृत०—लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः–महाभाष्य. ८,१,८ ( लडयोश्चैक्यम् )।

पालि०—लळेति ( प्रयो. )–जातक १,३६२; विसुद्धिमग्ग ३६५।

प्राकृत०—√लाल ( सक )=स्नेहेन पालने। लालंति–तंदु. ५०।

हिन्दी०—√लड्याना*†=लालने।

| | | |
|---|---|---|
| २३५०+√लण्ड् (ओलडि) १०/९<br>मै-श-च-जै-काक्र-<br>कात-शा × | उत्क्षेपे ( प )<br>क्षी-हे।<br>उत्क्षेपणे—<br>सा-वो। | > √लन्द् (लदि) उत्क्षेपणे (प) इति<br>चान्द्राः—क्षी।<br>√लण्ड् १/१७३ कोपे (प) काक्र। |

संस्कृत०—"इंरेजा नव षट् पञ्च लण्ड्रजाश्चापि भाविनः"–मेरुतन्त्रे २३ प्रकाशः। ( लण्ड्रे तदाख्यदेशे जायत इति ) [ फ्रेंच्–लोण्ड्रेस् ]। पपात लण्डं विसृजन् क्षितौ व्यसुः"–भा. पु. १०,३७,८–लण्डम्=पुरीषम् इति श्रीधरस्वामी। गीताप्रेसीय-संस्करणे तु—'लेण्डम्' इतिः पाठः।

पालि०—लण्ड=विष्ठा–जातक २,१९; धम्मपद १,१६३। लण्डिका=अजविष्ठा-गुटिका—जातक १,४१९; पेतवत्थु २८३।

प्राकृत०—√ओलंड (सक)=उल्लङ्घने। ओलंडेंति–णाया १,१–पत्र ६१। लिंड=हस्त्यादिविष्ठा (तु० गुर्जर० लीद)–णाया १,१—पत्र. ६३; उप २६४ टी; ती २।

प्राकृत०—लिंडिया, स्त्री=अजादिविष्ठा (द्र. गुज० लिंडी)—उप पृ. २३७। उल्लंडिअ, वि.=बहिष्कृत०—(पाअ)।

हिन्दी०—लेंड़ा ( <लण्ड– ) = विष्ठादण्डः।

हिन्दी०—लेंड़ी ( <लण्डिका ) = अजविष्ठागुटिका।

२३५१+√लण्ड् (लडि) १०/२५३ भासार्थः (प) ध्वनिसादृश्यानि पूर्ववत्।
मै-शा-च-जै-काकृ-कात क्षी-हे।
शा × भाषार्थः—सा।
भासने—वो।

२३५२+√लन्द् (लदि) १०/९ उत्क्षेपे (प) चान्द्रा <√लण्ड् (लडि) उत्क्षेपे (प)।
मै-सा-श-च-जै-काकृ- आहुः—क्षी। √लद् = भारे—माॅ.विलि.।
कात-शा-वो × क्षी हे। √लद् >लादना (हि.)।

इत्थं लक्षणमलक्षयताम् अन्धकुक्कुटीन्यायेन लक्ष्यमनुसरतां कियदिव रुष्यामः कियदिव तुष्यामः–क्षी।

प्राकृत०—उल्लद्दिय=भाराक्रान्तम् (सुर. २,२)।

[ लन्द ( <लन्दः)=कालः, समयः–पा. स. मह.। ]

हिन्दी०—लीद=हस्त्यश्वादिविष्ठा।

बुन्देली०—√उल्दबौ=उत्क्षेपणे।

२३५३+√लभ (लभ) १०/३८२ प्रेरणे (प) इति <√लाभ (लाभ) प्रेरणे (प)।
मै-सा-श-च-जै-काकृ- सभ्याः—क्षी।
कात-शा-हे × क्षी।
क्षेपे—वो।

२३५४+√लल् (लल) १०/१५६ ईप्सायाम् (आ) √लड् (लड) १०/ उपसेवायाम् (प)।
श,(जै√चल्[चले]) क्षी-मै-सा-च-काकृ- √लड् (लड) १/ विलासे (प)।
मुद्रणदोषः। 'ललै' कात-शा-हे-वो।
इति भाव्यम्।

यौ. क्रि.; प्रयो.–क्रीडायाम्, लीलायाम्–ह्वि.।

संस्कृत०—लालयेत्–मुक्तिको. २, २, ७। लालसायाम्–महो. २, २५। यो नः सदा लालयति–वा. रा. २,४७,६।

| | | |
|---|---|---|
| २३५५+√लश् (लश) १०/१९६ मै-सा-श-च-जै-कात × | शिल्पोपयोगे (प) इति कौशिकः—क्षो। क्षी। शिल्पयोगे—शा-हे-वो। शिलायोगे—काकृ। | <√लष् (लष) शिल्पोपयोगे (प)। |

संस्कृत०—लशुन०-(√अश् धातोर्व्युत्पत्तिः !) महाभार. ८,२०३४; सुश्रु. १,१४५,६।

| | | |
|---|---|---|
| २३५६+√लष् (लष) १०/१९६ मै-श-च-जै-काकृ-कात-शा × | शिल्पोपयोगे (प) क्षी। शिल्पयोगे—सा-हे-वो। शिलायोगे—काकृ। | √लस् (लस) १७२९ शिल्पयोगे (प)–सि. कौ.। √लस् (लस) १/ श्लेषणक्रीडनयोः (प)। √रस् (रस) १/ शब्दार्थः (प)। √रस् (रस) १०/ आस्वादनस्नेहनयोः (प)। |

हिन्दी०—√लासना ([त] रासना)।

| | | |
|---|---|---|
| २३५७+√लस् (लस) १०/१८७ क्षी-च-काकृ-शा ×, शयौ. क्रि.; प्रयोज. | शिल्पयोगे (प) मै-सा-जै-कात-हे-वो। ह्वि. | ध्वनिसादृश्यानि पूर्ववत्। |

संस्कृत०—लासयन्त्यस्तथैव च–वा. रा. ७,२,११; लासयन्त्यपरे तथा–२,६९,४।

| | | |
|---|---|---|
| २३५८+√लाभ (लाभ) १०/३८२ श-च× | प्रेरणे (प) क्षी-मै-सा-जै-काकृ-कात-शा-हे। क्षेपे—वो। | <√लभ (लभ) 'प्रेरणे' इति सभ्याः—क्षी। |

| | | |
|---|---|---|
| २३५९+√लिङ्ग् (लिगि) १०/२१२ श-च × | चित्रीकरणे (प) क्षी-मै-सा-हे। चित्रकरणे—जै-शा। काकृ। चित्रे—वो। | √लिङ्ग् (लिगि) १/गत्यर्थः(प)। लिङ्ग् १/४११kk गतौ (आ) |

संस्कृत०—(उल्लिङ्गितशात्रवेङ्गित०–किराता. १४,२।)

| | | |
|---|---|---|
| २३६०+√ली (ली) १०/२६२ च ×, श (काकृ–√लै ?) ९ | द्रवीकरणे (प) क्षी-मै-सा-जै-काकृ- | √री (रीङ्) ४/ स्रवणे (आ)। |

| | | |
|---|---|---|
| | कात-शा-हे ।<br>द्रावणे—वो । | √ली ९/ श्लेषणे ( प ) ।<br>लीलायताम्-गुह्यकाल्यु. ५० । |
| २३६१+√लुञ्ज् (लुजि) १०/३१ | हिंसाबलादान-<br>निकेतनेषु ( प )<br>क्षी-सा ।<br>हिंसाबलदान-<br>निकेतनेषु—हे ।<br>भा,-षट्टार्थे (=निकेतने<br>हिंसे बले दाने)—वो । | √लुज् ४/११६ विनाशे (आ)<br>च ।<br>√लुञ्ज् (लुजि) १०/भासार्थः<br>( प ) । |
| २३६२+√लुञ्ज् (लुजि) १०/२२७<br>च-शा ×,श | भासार्थः ( प )<br>क्षी-हे ।<br>भाषार्थः—मै-सा-<br>जै-काकृ-कात ।<br>भायाम्—वो । | √लञ्ज् (लजि) १०/भासार्थः<br>( प ) । |
| २३६३+√लुट् ( लुट ) १०/२२३<br>च ×,श | भासार्थः ( प )<br>क्षी-शा-हे ।<br>भासार्थः—मै-<br>सा-जै-काकृ-कात ।<br>भासि—वो । | |
| २३६४+√लुण्ट् ( लुण्ट )१०/२६<br>मै-जै ×,श | स्तेये (प) इत्येके<br>क्षी ।<br>क्षी-सा-च-काकृ-<br>कात-शा-हे ।<br>अवज्ञा-चौर्ये—वो । | < √लुण्ठ् (लुण्ठ) स्तेये (प) ।<br>√लुण्ट् ( लुटि ) १/ स्तेये<br>( प ) । |
| २३६५+√लुण्ठ् ( लुण्ठ ) १०/२६<br>सा-श-च-काकृ-कात-<br>शा-हे × | स्तेये ( प )<br>क्षी-मै-जै-वो । | > √लुण्ट् ( लुण्ट ) स्तेये<br>( प ) इत्येके—क्षी । |
| २३६६+√लुम्ब् (लुबि) १०/११६<br>च ×,श | अर्दने ( प )<br>क्षी-मै-जै-काकृ-कात- | √तुम्ब् (तुबि) १०/ अर्दने<br>( प ) । |

| | | |
|---|---|---|
| | शा-हे-वो । | √तुम्प् ( तुपि ) १०/ अर्दने |
| | अदर्शने—सा । | इति दीर्गः—क्षी । |
| | 'अर्दने' इति मैत्रेयः—सा । | |
| | मर्दने—काकृ । | |
| २३६७+√लूष् ( लूष ) १०/८५ श ( जै–√लुष्) | हिंसायाम् ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । वधे स्तेये च—वो । | √लूष् ( लूष ) १/ स्तेये ( प ) इति दुर्गः—क्षी । √रुश् ( रुश ) ६/ हिंसायाम् ( प )। |

**प्राकृत०**—√लूस ( सक )=वधे, ( २ ) पीडने, ( ३ ) दूषणे, ( ४ ) चौर्ये, ( ५ ) विनाशे, ( ६ ) अनादरे, ( ७ ) त्रोटने, ( ८ ) अल्पस्य दीर्घीकरणे; दीर्घस्य चाल्पीकरणे । लूसंति–सूअ. १,३,१,१४ ।

| | | |
|---|---|---|
| २३६८+√लोक् (लोकृ) १०/२४७ श × | भासार्थः ( प ) क्षी-शा-हे । | √लोक् ( लोकृ ) १/ दर्शने ( आ )। |
| | भाषार्थः—मै-सा-जै-काकृ-कात । | √लोच् ( लोचृ ) १/ दर्शने ( आ )। |
| | दर्शने—च । दीप्तौ—वो । | √लोच् ( लोच ) १०/ भासार्थः ( प )। |
| यौ. क्रि.; प्रयोज. | दर्शने—ह्वि. । | |

**संस्कृत०**—लोकम्–ऋ. २०,३०,७ । वसुधामभिलोकयन्—वा० रा. ६,२,७ ।

| | | |
|---|---|---|
| २३६९√लोच् (लोचृ) १०/२४८ च×,श (काकृ–√लोछ्) | भासार्थः ( प ) क्षी शा-हे । | ध्वनिसादृश्यानि पूर्ववत् । |
| | भाषार्थः—मै-सा-जै-काकृ कात । | |
| | भासे—वो । | |
| यौ. क्रि.; प्रयोज. | दर्शने, विचारे—ह्वि. । | |

**संस्कृत०**—अन्वालोचयत्–बृहदारण्यको. ४९ शाङ्करभाष्यम् । आलोचयामः–कात्या. श्रौ. ( टीकायाम् )–८५,३ । उपोषिताभ्यामिव लोचनाभ्याम्–रघु. २,१९ । लोचने दीप्तिरिति भासार्थस्य सिद्धिः स्पष्टा ।

| | | |
|---|---|---|
| २३७०+√वच् ( वच ) १०/२९१ श-च × | भाषणे ( प ) आधृषाद्वा क्षी-मै-शा-हे । | √वच् (वच) २/ भाषणे ( प )। |

